श्रुतिस्मृत्यादिप्रोक्तधर्मसंग्रहः

# आश्रमधर्मरहस्याख्योग्रन्थः ।

धर्मजिज्ञासूनामत्याह्लादकरापूर्वोयंदर्शनीयः

निर्मलसंप्रदायात्तश्रीमत्पण्डितोद्धव

सिंहेन संगृहीतः ।

सर्वाश्रमहिताय श्रीयुत् बाबू कृपारामात्मज

जगन्नाथप्रसादेन काश्यांमुद्रापयित्वा

प्रकाशितः ।

वाराणसीस्थ

यज्ञेश्वर यन्त्रालये मुद्रितम् ।

मूल्य ।)

५ ४६

| पृष्ठांकं | पंक्त्यंकं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४४ | २१ | स्नानान्तु | स्नातान्तु |
| ४५ | २२ | राजस्त. | राजस्तु. |
| ४५ | २५ | चपस्तुत | चप्रस्तुत |
| ४६ | १७ | काच्युतः | काच्च्युतः |
| ४७ | १२ | पवसर्वः | पपसर्वः |
| ४७ | २१ | वापदा | वायदा |
| ४७ | २३ | दारान्तिः | दारान्निः |
| ४९ | १२ | कलौयुगै | कलौयुगे |
| ४९ | १३ | चसिष्टस्य | वसिष्टस्य |
| ४९ | २५ | फेनयो | फेनपो |
| ५० | ६ | ऊर्जीन्ते | ऊर्जान्ते |
| ५० | १४ | देशो | देशे |
| ५० | १४ | कर्तंक्य | कर्त्तव्यः |
| ५० | १५ | सोचित | सोचितः |
| ५० | १७ | वैखान्सं | वैखानसं |
| ५० | २१ | गृहव्यसि | गृहवासि: |
| ५२ | ८ | त्रतत्र | त्रतत्र |
| ५२ | २१ | विह्न | चिह्न |
| ५३ | २६ | वणानां | वर्णानां |
| ५४ | १८ | कर्त्तव्यम | कर्त्तव्यम् |
| ५५ | २४ | गम्रे | मग्रे |
| ५६ | १६ | नन्वर्थं | नन्वथ |
| ५६ | २५ | धारणाद | धारणद |
| ५७ | १६ | चारिणी | चारिणि |
| ५८ | ५ | धारण | धारणं |

| पृष्ठांकं | पंक्त्यंकं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५८ | ११ | साविवी | सावित्री |
| ५८ | १२ | भ्यांत्रीपरि | भ्यांपरि |
| ५८ | १४ | वृदारामे | दृष्टारामे |
| ५८ | १५ | रेद्दष्टादि | रेत्यादि |
| ५८ | १७ | नुषाग्नि | तुषाग्नि |
| ५८ | १९ | त्सवभू | त्सर्वभूः |
| ५९ | १ | भेवाचार | मेवाचार |
| ५९ | १२ | परिव्राट | परिव्राट् |
| ५९ | १५ | मुग्द्विजः | भुग्द्विजः |
| ५९ | २७ | येष | वेष |
| ६१ | ४ | दृष्ट्याः | दृष्ट्याऽ |
| ६१ | ७ | चताय्र्यं | चत्वार्य्यं |
| ६२ | ५ | भिक्षवः | वैष्णवभिक्षवः |
| ६४ | ५ | मंवषट् | नंवषट् |
| ६४ | १३ | सर्वे | सर्वं |
| ६५ | ६ | ऽमानितोऽमानित | ऽमानित |
| ६५ | ७ | मो०व्मासोक्तं | मो०व्यासोक्तं |
| ६६ | ११ | वृद्धयः | वुद्धयः |
| ६६ | १२ | मुण्डानी | मुण्डानां |
| ६६ | २६ | सलिंगी | सलिंगि |
| ६८ | १८ | पुरुषैण | पुरुषेण |
| ६८ | २८ | कचैल | कुचैल |
| ६९ | २३ | तस्वज्ञो | तत्त्वज्ञो |
| ६९ | २६ | ग्रतिमितितत्त्वद | गतिमितितत्त्वद |
| ७० | १ | भूमे | धूमे |

ॐ तत्सत्॥ ॐ समस्तस्मृतिकारकेभ्यः समस्तगुरुभ्य
श्च नमो नमः॥ ॐ विघ्नेश्वरं विघ्नविनाशनाय। वागीश्व
रीं श्रीकृष्णं वेदव्यासं मार्त्तण्डमारोग्यकर्त्ते गिरीश
म् सर्वान् शिष्टान् शिरसाभिवन्दे १ अथ श्रीमद्रुद्रदेव
सिंहेन विदुषा स्मृतीतिहासादिप्रसारभूतधर्मान्संग
ह्य आश्रमधर्मरहस्याख्यो ग्रन्थः प्रारभ्यते॥ आदौ
श्रुतिस्मृतिविहितब्रह्मचारिधर्मास्संगृह्यन्ते॥ जातमा
त्रः शिशुस्तावत् यावदष्टौ समा वयः सहि गर्भसमो ज्ञेयो
व्यक्तिमात्रप्रदर्शिनः॥ भक्ष्याभक्ष्ये तथा पेये वाच्या
वाच्ये तथानृते। तस्मिन्काले न दोषोस्ति स यावन्नोपनी
यते॥ उपनीतस्य दोषोस्ति क्रियमाणैर्विगर्हितैः॥ उप
नीतस्त्वनाश्रमी न तिष्ठेद्दिनैकमपि॥ आश्रमेण विना
तिष्ठन् प्रायश्चित्तीयते हि सः॥ अनहस्सः। जपे होमे त
थादाने स्वाध्याये च रतस्तु यः। नासौ तत्फलमाप्नोति कु
र्वाणोप्याश्रमाच्च्युत इति॥ एवमत्र यः कश्चित्कु
रुते धर्मं विधिहीनाद्दुरात्मवान् न तत्फलमवाप्नो
ति कुर्वाणोपि विधिच्युतः॥ अतः उपनीतो माणव
को वसेद्गुरुकुलेषु च गुरोः कुलेपि संकुर्य्यात् कर्म
णा मनसा गिरा॥ तस्माद्व्रतानीह चरेत्स्वाध्याय
सिद्धये। शौचाचारमशेषं तु शिक्षयेद्गुरुसन्निधौ॥ ब्र
ह्मचर्य्यमधः शय्यां तथा वह्नेरुपासना। उदकुम्भा
न् गुरोर्दद्यात् गोग्रासं चेन्धनानि च॥ अजिनं दण्ड
काष्ठं च मेखलां चोपवीतकम्। धारयेदप्रमत्तश्च
ब्रह्मचारी समाहितः॥ सायं प्रातश्चरेद्भैक्षं भोज्या
र्थं संयतेन्द्रियः। आचम्य प्रयतो नित्यं न कुर्याद्दन्तधा
वनम्॥ छत्रं चोपानहं चैव गन्धमाल्यादि वर्जयेत्।
नृत्यगीतमथालापं मैथुनं च विवर्जयेत्॥ हस्त्य
श्वारोहणं चैव संत्यजेत्संयतेन्द्रियः॥ संध्योपासिनम

कुर्वीत ब्रह्मचारिव्रते स्थितः॥अभिवाद्य गुरोः पादौ सं
ध्याकर्मावसानतः॥तथा योगं प्रकुर्वीत मातापित्रोश्च भ
क्तितः॥एतेषु त्रिषु नष्टेषु नष्टाः स्युः सर्वदेवताः॥एतेषां
शासने तिष्ठेत् ब्रह्मचारी विमत्सरः॥अधीत्य च गुरोर्वे
दान् वेदौ वा वेदमेव वा॥गुरवे दक्षिणां दद्यात् संयमी
ग्राममावसेदिति॥एवं·ऐणमुत्तरीयं स्यात् वनस्थब्र
ह्मचारिणाम्॥शुक्लकषायवसने गृहस्थस्य यतेः क्र
मात्॥उक्तालाभे तु सर्वेषां कुशचीरं विधीयते॥मौञ्जी
तु मेखलादण्डपालाशं ब्रह्मचारिणः॥यतेस्तु वैणवोद
ण्डो यतेः काषायवाससः॥कुशचीरं वल्कलं वा वनस्थ
स्य विधीयते॥कटीसूत्रं च कौपीनं महत्स्व शुक्लवाससा
कुण्डले चाङ्गुलीयानि गृहस्थस्य विधीयते॥वानप्र
स्थो यतिर्वा स्यात् सदैव श्मश्रुरोमधृत्॥सुकेशी सुशि
खो वा स्यात् गृहस्थः सौम्यवेषवान्॥यतिश्च ब्रह्मचा
री च उभौ भिक्षाशनौ स्मृतौ॥शाकमूलफलाशी स्यात्
वनस्थः सततं द्विजः॥कुसूलकुम्भधान्यो वा त्र्याहिको
वा भवेद्गृही॥प्रतिग्रहेण सौम्येन जीवेद्यायावरेण वेत्या
दिहारीतसंहिता॥एवमन्यत्र॥वर्जयेत्मधुमांसगन्ध
माल्यादिवास्वप्नाञ्जनाभ्यञ्जनयानोपानहच्छत्रका
मक्रोधलोभमोहवाद्यवादनस्नानदन्तधावनहर्षनृ
त्यगीतपरिवादभयानि॥गुरुदर्शने कण्ठप्रावरणाव
सक्थिकापादप्रसारणानि निष्ठीवितहसित
जृम्भितास्फोटितानि॥स्त्रीप्रेक्षणालम्भने मैथुनश
ङ्कायाम्॥द्यूतहीनवर्णसेवामदत्तादानं हिंसा आचार्य
तत्पुत्रस्त्रीदीक्षितनामानि शुष्कां वाचं मद्यं नित्यं
ब्राह्मणः॥अधःशय्याशायी पूर्वोत्थायी जघन्यसंवेशी
वाग्बाहूदरसंयतः स्यात्॥नामगोत्रे गुरोः सम्मानतो
निर्दिशेत्॥एवं गुरुस्त्रीपुत्रेष्वपि कुर्यात्॥नोच्छिष्टाश्न

नस्नपनमसाधनपादप्रक्षालनोन्मर्द्दनोपसंग्रहणा
निकुर्य्यात्। अव्यवहारप्राप्तेन सार्ववर्णिकं भैक्ष्यचरण
मभिशस्तपतितवर्ज्जम्। आदिमध्यान्तेषु भवच्छब्दः
प्रयोज्यो वर्णानुपूर्व्येण। आचार्य्यज्ञातिगुरुष्वेष्वलाभे
ऽन्यत्र। पूर्वं निवेद्य गुरवेऽनुज्ञातो भुञ्जीतेति गौतम
संहिता॥ ननु पूर्वह्रासीतोक्तानामधःशय्यादिधर्म्मा
णामत्रापि विधानात्पौनरुक्त्यमिति चेन्नाभ्यासेनत
द्धर्मदृढतरतासम्पादनार्थत्वात्। स्मृतिभेदे
नतथाभिधानाच्च एवमग्रेऽपि केशादिधारणे स्मृति
प्रकरणादिभेदेनाभ्यासः सदर्थो विज्ञेयः। अत्र गर्भा
ष्टमेषु ब्राह्मणमुपनयीत। गर्भैकादशेषु राजन्यम्।
गर्भद्वादशेषु वैश्यम्। पालाशो दण्डो वैल्वो वा ब्राह्म
णस्य। नैयग्रोधः क्षत्रियस्य। औदुम्बरो वा वैश्य
स्य। कृष्णाजिनमुत्तरीयं ब्राह्मणस्य। रौरवं क्षत्रिय
स्य। गव्यं बस्ताजिनं वैश्यस्य। शुक्लमहतं वासो ब्रा
ह्मणस्य। मांजिष्ठं क्षत्रियस्य। हारिद्रं कौशेयं वैश्य
स्य। सर्वेषां वा तान्तवमरक्तमिति। यज्ञोपवीती वेदं सो
दकश्च कमण्डलुः। प्राङ्मुखोऽन्नादि भुञ्जीत। न
वृक्षमारोहेन्न कूपमारोहेन्नाग्निं मुखेनोपधमे
त्। भार्यया सह नाश्नीयात्। नेन्द्रधनुर्नाम्ना निर्दिशेत्
मणिधनुरिति ब्रूयात्। धारयेद्रुक्मकुण्डले च। न च हि
मालां धारयेदन्यत्र रुक्ममय्या इति॥ ॥आचारः पर
मो धर्मः सर्वेषामिति निश्चयः। हीनाचारपरीतात्मा
प्रेत्य चेह विनश्यति। नैनं तपांसि न ब्रह्म नाग्निहो
त्रं न दक्षिणाः। हीनाचारमितं भ्रष्टं तारयन्ति कथंचन।
आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भि
रङ्गैः। छन्दांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इ
व जातपक्षाः। आचारहीनस्य तु ब्राह्मणस्य वेदाः षडङ्गा

अखिलाः सपत्नाः कांक्षीतिश्रुत्यावर्धितुंगन्धोक्ष
भ्यस्तान्मद्भवरीपीथः॥ नैनं छन्दांसि वृजिनात्तारय
न्ति मायाविनं मायया वर्तमानम्। नव्याहोरात्र्यमी
धर्मानेवुनातिनद्वद्धवधावविष्टमिति वशिष्ठसंहि
ता॥ ब्रह्मचारिगृहस्थधर्मो वेदाभ्यासः। न ब्रह्म यद्य
ऽपि वेत्तिपङ्क्तौ नतन्यदानात्वमतिदानम्। सर्वे
नरन्नाः क्रतवः सदानाः नाप्येहष्टः कैश्चिदस्याहिक
स्येति कात्यायनस्मृतेः॥ एवमेव वेदाभ्यासो हि विप्रा
णां परमं तप उच्यते। ब्रह्मयज्ञः स हि द्विजः प्रदृष्टः स
द्विजस्तु सः॥ वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः। त
द्दानं चैव शिष्येभ्यः वेदाभ्यासो हि पञ्चधा॥ समित्पुष्प
कुशादीनां स कालः समुदाहृतः। इति दक्षवचनात्॥ अ
ध्यापनसमर्थे गुरौ परित्यज्य व्यभिचारिणी वान्यगन
गच्छेत्॥ नापक्षिप्तोऽधिमोदेत नक्षत्रे नाहितोऽपि वा।
सत्पूर्वमेव नाहेत्तदा सुत्वो ब्रह्म माचरेत्। तैनैष्ठिको ब्र
ह्मचारी ब्रह्मलोकमवाप्नुयादिति व्यासस्मरणात्
॥ एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्॥ पृथिव्यां ना
स्ति तद्द्रव्यं यद्दत्त्वा ह्यनृणी भवेत् १ एकाक्षरप्रदाता
रं यो गुरुं नाभिमन्यते। शुनां योनिशतं गत्वा चाण्डा
लेष्वपि जायते २ वेदं गृहीत्वा यः कश्चिच्छास्त्रं चै
वावमन्यते। स सद्यः पशुतां याति संभवानेकविंश
तिम् ३ इत्यत्रिस्मृतेः॥ अतः उपवीतः सदा विप्रो गु
रुहितमाचरेत्। स्त्रगन्धमांसानि ब्रह्मचारी वि
वर्जयेत्॥ सायं प्रातस्तु भिक्षेत ब्रह्मचारी सदा
व्रती। निवेद्य गुरवेऽश्नीयात् प्राङ्मुखो वाग्यतः
शुचिः॥ सायं प्रातर्द्विजातीनामशनं श्रुतिचोदि
तम्। नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः॥ आ
चम्यैव तु भुञ्जीत भुक्त्वा चोपस्पृशेद्द्विजः। अनाचा

न्नस्तु योऽश्नीयात् प्राश्चित्तीयतेतु सः॥ अनाचान्तः पि
बेद्यस्तु यः पिबा भक्षयेद्द्विजः॥ गायत्र्यष्टसहस्रंतु जपं
कृत्वा विशुध्यति॥ अशब्दाभिरनुष्णाभिः सुवर्णरस
गन्धिभिः॥ हृद्गताभिरफेनाभिः त्रिचतुर्वाद्भिराचरेत्॥ प
रिमृज्य द्विरास्यंतु द्वारखांगानि च स्पृशेत्॥ स्नात्वा पीत्वा
तथा भुक्त्वा स्पृष्ट्वा चैव द्विजोत्तमः॥ अनेन विधिना विप्रः
आचान्तः शुचितामियात्॥ शूद्रः शुध्यति हस्तेन वैश्यो
दन्तेषु वारिभिः॥ कण्ठागतैः क्षत्रियस्तु आचान्तः शुचि-
तामियात्॥ ब्रह्मचारी तु यो गच्छेत् स्त्रियं कामप्रपीडितः॥
प्राजापत्यं चरेत्कृच्छ्रं सम्यग्वेकं समन्वितः॥ ब्रह्मचारी तु
यः स्कन्देत् कामतः शुक्रमात्मनः॥ अवकीर्णीव्रतं कु
र्यात् स्नात्वा शुध्येदकामतः॥ ब्रह्मचारी तु योऽश्नीयान्म
धु मांसं कथंचन॥ प्राजापत्यं तु कृत्वासौ मौञ्जीहोमे
न शुध्यति॥ दिवा स्वपिति यः स्वस्थो ब्रह्मचारी कथंच
न॥ स्नात्वा सूर्यं समभ्यर्च्य गायत्र्यष्टशतं जपेत्॥ एवं ध
र्मः समाख्यातः प्रथमाश्रमवासिनाम्॥ एवं संवर्तमान
स्तु प्राप्नोति परमं पदम्॥ इति संवर्तस्मृतिः॥ अत्र केशव
स्त्र विधौ मनुराह॥ क्लृप्तकेशनखश्मश्रुर्दान्तः शु
क्लाम्बरः शुचिः॥ स्वाध्याये चैव युक्तः स्यान्नित्यमात्म
हितेषु चेति॥ एवमत्र योगियाज्ञवल्क्यः॥ क्लृप्तकेशन
खश्मश्रु दान्तः शुक्लाम्बरः शुचिः॥ स्वाध्याये चैव युक्तः
स्यात् नित्यमात्महितेषु चेति॥ शुक्लाम्बरधरो नीच
केशश्मश्रुनखः शुचिरिति च॥ नीचं वलितं केशादिकु
र्यादिति यावत्॥ एवममुण्डितं केशादिजलं शुद्धत्व
म्॥ मार्जनी रजकेशाम्बु देवतायतनोद्भवम्॥ तेनावगु
ण्ठितं तेषु गंगाम्भः प्लुत एव सः॥ दुस्त्रिस्मरणात्॥ ए
वमत्र बौधायनः॥ कषायवासाः कुरुते जपहोमप्रति
ग्रहान्॥ न तद्देवागमं भवति हव्यकव्यमयो हविरिति॥

एवं·आर्द्रवासश्चयः कुर्यात् जपंहोमंप्रतिग्रहम्
॥ सर्वंतद्राक्षसंविद्यात् बहिर्जानुश्चयत्कृतम्भिनि
ध्यासः॥ एवं·जपहोमोपवासेषु धौतवस्त्रधरोभ
वेत्॥ अलंकृतःशुचिर्मौनी श्राद्धादौविजितेन्द्रि
यइतिवसिष्ठः॥ एवं·अभ्यङ्गास्निग्धेधौतेतु शिष्ट
नशुक्लेचवाससी॥ परिधायमृदंभूम्याम् स्थापादौ
चमार्जयेत्॥ १॥ नद्वाससोरसम्पत्तौशाणक्षौमावि
कानितु॥ कुतपंयोगपट्टंवाद्विवासस्तुयथाभवेत्॥
२॥ नजीर्णनीलकाषायमांजिष्ठेनतुवाससा॥ मूत्रा
द्युपहतेनैवशुचिःस्यान्नैकवाससा॥ ३॥ इतिपरा
शरः॥ एवं· नवेष्टितशिरा नकृष्णाकषायवासा
देवपितृकार्यंकुर्यादितिशुक्रः॥ एवमत्र·॥
स्नानंदानंजपोहोमःस्वाध्यायःपितृतर्पणम्
॥ पञ्चयज्ञावृथातस्य नीलीवस्त्रस्यधारणा
त्॥ १॥ नीलीरक्तंयदावस्त्रंब्राह्मणोऽङ्गेषुधारये
त्॥ अहोरात्रोषितोभूत्वा पञ्चगव्येनशुध्यति॥
२॥ रोमकूपैर्यदागच्छेद्रसोनील्यास्तुकर्हिचित्॥
पतितस्तुभवेद्विप्रःत्रिभिःकृच्छ्रैर्विशुध्यति॥ ३॥ नी
लीरक्तेनवस्त्रेण यदन्नमुपनीयते॥ अभोज्यंत
त्द्विजातीनांभुक्त्वाचान्द्रायणंचरेत्॥ ४॥ भक्षये
द्यश्चनीलीन्तुप्रमादाद्ब्राह्मणःक्वचित्॥ चान्द्राय
णेनशुद्धिःस्यादापस्तम्बोऽब्रवीन्मुनिरित्यापाप
स्तम्बसंहितौ॥ अतऊर्ध्वंप्रवक्ष्यामि नीलीशौच
स्यवैविधिम्॥ स्त्रीणांक्रीडार्थसंभोगेशयनीयेनदु
ष्यति॥ १॥ पालनंविक्रयश्चैव तद्वृत्त्याउपजीवनम्॥
पतितस्तुभवेद्विप्रस्त्रिभिःकृच्छ्रैर्व्यपोहति॥ २॥ स्ना
नंदानंजपोहोमः स्वाध्यायःपितृतर्पणम्॥ स्पृष्ट्वा
तस्यमहापापंनीलीवस्त्रस्यधारणात्॥ ३॥ नी

लोरक्तंयदावस्त्रम् स्नानेनतुधारयेत्।अहोरात्रोषि
तोभूत्वा पञ्चगव्येनशुध्यति ४ भक्षयेत्समादत्तो
नीलींद्विजातिस्तुसमाहितः त्रिषुवर्णेषुसामान्य
श्चान्द्रायणमितिस्थितम् ५ नीलीरक्तेनवस्त्रेणय
दन्नमुपनीयते नोपतिष्ठतिदातारंभोक्ताभुंक्तेतुकि
ल्बिषम् ६ नीलीरक्तेनवस्त्रेणयस्यांगेर्पितंभवेत्
तेनभुक्तेनविप्राणांदिनमेकमभोजनम् ७ मृतेभ
र्तरियानारीनीलीवस्त्रंप्रधारयेत्।भर्त्तातुनरकंया
तिसानारीतदनन्तरम् ८ वापितायत्रनीलीस्यात्ता
वद्भूरशुचिर्भवेत् यावद्द्वादशवर्षाणिअतऊर्ध्वं
शुचिर्भवेत् ९ इत्यङ्गिरोक्तधर्माः॥अत्रमनुरप्याह
वेदमेवसदाभ्यसेत् तपस्तप्स्यन्द्विजोत्तमः वे
दाभ्यासोहिविप्रस्य तपःपरमिहोच्यते १ आहै
वसनखाग्रेभ्यः परमंतप्यतेतपः यःस्रग्व्यपिद्विजोऽ
धीतेस्वाध्यायंशक्तितोऽन्वहम् २ वेदशास्त्रार्थ
तत्वज्ञोयत्रतत्राश्रमेवसन् इहैवलोकेतिष्ठन्स
ब्रह्मभूयायकल्पते ३ अज्ञेभ्योग्रन्थिनःश्रेष्ठाः
ग्रन्थिभ्योधारिणोवराः।धारिभ्योज्ञानिनःश्रेष्ठाः
ज्ञानिभ्योव्यवसायिनः ४ योऽनधीत्यद्विजोवेद
मन्यत्रकुरुतेश्रमम् सजीवन्नेवशूद्रत्वमाशुग
च्छतिसान्वयः ५ निखिलवेदपाठाशक्तावपि।अ
पांसमीपेनियतोनैत्यकंविधिमास्थितः सावित्री
मप्यधीयीत गत्वारण्यंसमाहितः ६ एतदक्षरमे
तांचजपन्व्याहृतिपूर्विकाम्।सन्ध्ययोर्वेदविद्विप्रोवे
दपुण्येनयुज्यते ७ अस्यार्थः एतदक्षरं ओंकार
रूपम्।एताम् त्रिपदांसावित्रीं व्याहृतित्रयपूर्वि
कां संध्याकालेजपन्।वेदज्ञोविप्रादिः वेदत्रया
ध्ययनपुण्येनयुक्तोभवतीति॥सहस्रकृत्वस्त्वभ्य

स्ववहिरेतत्त्रिकंद्विजः। महतोप्येनसोमासात्त्वचे-
वाऽहिर्विमुच्यते।८। ओंकारपूर्विकास्तिस्रोमहाव्या
हृतयोऽव्ययाः। त्रिपदाचैवगायत्रीविज्ञेयंब्रह्मणो
मुखम् ९ योधीतेऽहन्यहन्येतांस्त्रीणिवर्षाण्यत
न्द्रितः। सब्रह्मपरमभ्येतिवायुभूतःखमूर्तिमान्।
१०। एकाक्षरंपरंब्रह्मप्राणायामाःपरंतपः। सावि
त्र्यास्तुपरन्नास्तिमौनात्सत्यंविशिष्यते।११।अस्या
र्थः एकाक्षरंओंकारःपरंब्रह्म परब्रह्मावाप्तिहेतुत्वा
त् ॐकारस्यजपेन तदर्थस्यचपरंब्रह्मणोभावन
यातद्वाप्तेः। प्राणायामाःसप्रणवस्याहृतिसशि
रस्कगायत्रीभिःत्रिरावृत्तिभिःकृताःचान्द्रायणादि
भ्योपिपरंतपः। प्राणायामाः इतिबहुवचननिर्देशा
त्त्रयोवश्यंकर्तव्याइत्युक्तम्॥ मिलितमंत्रस्वरू
पंच॥ ओंभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐ
तपः ॐसत्यं ॐतत्सवितुर्वरेण्यंभर्गोदेवस्यधी
महिधियोयोनःप्रचोदयात् आपोज्योतीरसोमृ
तंब्रह्मभूर्भुवःस्वरों इति। सावित्र्याः प्रकृष्टमन्य
न्मंत्रजातन्नास्ति। मौनादपिसत्यंवाग्विशिष्यते
एषान्चतुर्णांस्तुस्वाचत्वार्यंतान्युपासनीयानीति
कल्पतरुइति॥ विधियज्ञाज्जपयज्ञोविशिष्टोद
शभिर्गुणैः। उपांशुःस्याच्छतगुणःसाहस्रोमा
नसःस्मृतः १२ येपाकयज्ञाश्चत्वारोविधियज्ञ
समन्विताः। सर्वेतेजपयज्ञस्यकलांनार्हन्तिषोड
शीम् १३ विद्याचाधिकारिशिष्येभ्योदेयावेत्तद
स्याह॥ आचार्यपुत्रःशुश्रूषुर्ज्ञानदोधार्मिकः
शुचिः। आप्तःशक्तोऽर्थदःसाधुःस्वाध्याप्यादश
धर्मतः १४ नापृष्टःकस्यचिद्ब्रूयात् नचान्यायेनपृ
च्छतः। जानन्नपिहिमेधावी जडवल्लोकआचरे

त् १५ अधर्मेणचयः प्राह यश्चाधर्मेण पृच्छति। तयोरन्य
तरः प्रैति विद्वेषं वाधिगच्छति १६ धर्मार्थौ यत्र न स्यातां
शुश्रूषा वापि तद्विधा। तत्र विद्या न वक्तव्या शुभं बीजमि
वोषरे १७ विद्ययैव समं कामं मर्त्तव्यं ब्रह्मवादिना। आप
द्यपि हि घोरायां न त्वेनामिरिणे वपेत् १८ विद्या ब्राह्मण
मेत्याह शेवधिस्तेऽस्मि रक्ष माम्। असूयकाय मां मादाः त
थास्यां वीर्यवत्तमा १९ यमेव तु शुचिं विद्यान्नियतब्रह्म
चारिणं। तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने २० ब्र
ह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात्। स ब्रह्मस्तेयसं
युक्तो नरकं प्रतिपद्यते २१ लौकिकं वैदिकं वापि तथा
ध्यात्मिकमेव च। आददीत यतो ज्ञानं तं पूर्वमभिवाद
येत् २२ अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः। त
मपीह गुरुं विद्यात् श्रुतोपक्रियया तया २३ ब्राह्मस्य ज
न्मनः कर्त्ता स्वधर्मस्य च शासिता। बालोपि विप्रो वृद्ध
स्य पिता भवति धर्मतः २४ अज्ञो भवति वै बालः पिता
भवति मन्त्रदः। अज्ञं हि बालमित्याहुः पितेत्येव तु मंत्रद
म् २५ न हायनैर्न पलितैर्न वित्तेन न बंधुभिः। ऋषयश्च
क्रिरे धर्मं योनूचानः स नो महान् २६ विप्राणां ज्ञानतो
ज्येष्ठ्यं क्षत्रियाणां तु वीर्यतः। वैश्यानां धान्यधनतः शू
द्राणामेव जन्मतः २७ न तेन वृद्धो भवति येनास्य पलि
तं शिरः। यो वै युवाप्यधीयानः तं देवाः स्थविरं विदुः २८
यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः। यश्च विप्रोन
धीयानः त्रयस्ते नाम बिभ्रति २९ यथा षंढोऽफलः स्त्री
षु यथा गौर्गवि चाफला। यथा चाज्ञेऽफलं दानं तथा वि
प्रोऽनृचोऽफलः ३० नीचं शय्यासनं चास्य सर्वदा गुरु
सन्निधौ। गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ३१
गुरोर्यत्र परीवादो निंदा वापि प्रवर्त्तते। कर्णौ तत्र पिधा
तव्यौ गन्तव्यं वा ततोऽन्यतः ३२ परीवादात्खरो भवति श्वा

वैभवति निंदकः। परिभोक्ता क्रमिर्भवति कीटो भवति
मत्सरी ३३ यथा खनन् खनित्रेण नरो वार्यधिगच्छ-
ति। तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ३४ आस
मात्नेः शरीरस्य यस्तु शुश्रूषते गुरुम्। स गच्छत्यंजसा
विप्रो ब्रह्मणः सद्म शाश्वतम् ३५ एवमन्यदपि धर्मा
नाविधामनुमोक्ता अत्र ज्ञातव्या इति॥ ॥एवमत्र
चतुर्धा ब्रह्मचारी स्यात् गायत्रो वैधस्तथा। प्राजाप
त्यो बृहंश्चेति लक्षणानि पृथक् पृथक् १ आक्षार लवण
श्रीस्यात् गायत्र्यभ्यासतत्परः। वर्त्तेते भिक्षया नित्यं गा
यत्रोऽयं प्रकीर्तितः २ चतुर्भिर्द्वादशाब्दानि यो धीया
न्व्रतुः श्रुतीः। भिक्षया ब्रह्मचर्येण तिष्ठ द्ब्राह्मः स उ
च्यते ३ ऋतुकालाभिगामी सन् परस्त्रीपरिवर्जकः
वेदान् ध्येति भिक्षाभक् प्राजापत्यः प्रमुच्यते। ४।
गुरौ वा गुरुपुत्रस्य तत्पत्न्या वापि सन्निधौ। यो वसेद
भ्यसन् ज्ञानं ब्रह्मचारी स नैष्ठिकः ५ इति विभागः
वेदस्युपलक्षणम्॥ जप्यानि ब्रह्मसूक्तानि शिवसूक्ता
नि चैव हि। वैष्णवानि च सूक्तानि तथा सौरायणे।
कथा ६ सारस्वतानि दौर्गाणि वारुण्यान्यनलानि च।
पौराणिकानि चान्यानि तथा सिद्धान्तिकानि च ७ सर्वे
षां जपसूक्तानां ऋचां च यजुषां तथा। साम्नां चैकाक्षरा
दीनां गायत्री परमो जपः ८ अत्र ब्रह्मसूक्तानीति। ब्र
ह्मप्रतिपादकानि सत्यनामेत्यादीनि प्रणवादीनि।
सहस्रशीर्षायनन्तमन्त्ररूपाणि॥ एष आत्मेति हो
वाचैतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्र
ह्मणो नाम सत्यमित्यादि वेदोक्तानीत्यर्थः॥ सिद्धान्त
कानीति। सोऽहं। अहं ब्रह्मास्मीत्यादीन्यवर्णनाशक
जीवब्रह्माभेदप्रतिपादकमन्त्ररूपाणीत्यर्थः॥ एवं
नतत्प्रमाणसिद्धानि शिवसूक्तादीनि ज्ञातव्यानि॥ ज

प्यानीत्यारभ्यानलानिचैत्पन्नानिवैदिकमंत्राणि
।पौराणिकानिश्वासमोक्तानि।अन्यानि·तन्त्रिका
निश्रीमहादेव·गुरुदत्त·गोरक्ष·गुरुनानकप्रभृ
तिसर्वैहैःप्रणीतानिमुमुक्षुश्रेयस्कराणिमंत्राणि।
जप्यानीत्यर्थः॥ इतिसप्तारभ्यानपराशरसंहिता
॥ ॥ एवमत्र·यथाजातबलोवह्निर्दहत्यार्द्रान
पिद्रुमान्।तथादहतिवेदज्ञःकर्मजंदोषमात्मनः।
१ यथामहाहृदेलोष्टंक्षिप्रंसर्वंविनश्यति।एवमा
त्मकृतंपापंत्रयीदहतिदेहिनः २ तपस्तपतियोऽर
ण्येषुनिर्मूलफलाशनः।ऋचमेकांचयोधीतेत
त्तानिचतत्फलम् ३ वेदाभ्यासोयथाशक्त्याम
हायज्ञक्रियाक्षमा।नाशयत्याशुपापानिमहापात
कजान्यपि ४ नवेदबलमाश्रित्यपापकर्मरतिर्भवे
त्।अज्ञानाच्चप्रमादाच्चदह्यतेकर्मनेतरत् ५ आर
म्भयज्ञःक्षत्रियस्य हविर्यज्ञोविशामपि।परिचर्या
यज्ञःशूद्रस्तुजपयज्ञोद्विजोत्तमः ६ आरम्भयज्ञा
ज्जपयज्ञोविशिष्टोदशभिर्गुणैः।उपांशुःस्याच्छत
गुणःसाहस्रोमानसःस्मृतः ७ अमृतंब्राह्मणस्या
न्नंक्षत्रियान्नंपयःस्मृतम्।वैश्यस्यचान्नमेवान्नंशू
द्रान्नंरुधिरंस्मृतम् ८ शूद्रान्नरसपुष्टाङ्गोअधी
यानोपिनित्यशः।जुह्वन्वापिजपन्वापि गतिमूर्ध्वां
नविन्दति ९ यस्तुवेदमधीयानःशूद्रान्नमुपभुञ्जी
त।शूद्रोवेदफलंयाति शूद्रत्वंचाधिगच्छति १०
राजान्नंहरतेतेजः शूद्रान्नंब्रह्मवर्चसम्।स्वसुता
न्नंचयोभुंक्ते सभुंक्तेपृथिवीमलम् ११ इत्यत्रिसं
हिता·अत्रसच्छूद्रासच्छूद्रभेदाच्छूद्रोद्विविधो
।तत्रसच्छूद्राःपात्रग्राह्याःभोज्यान्नाःगोपालनापि
तादयोज्ञेयाः।उक्तमेतत्पराशरसंहितायां।अध्या

ये।७।भोज्याशनास्तुसच्छूद्रा अभोज्यान्नाः परे स्मृताः।
आमाशनानि भोज्यानि शृतमुच्छिष्टमुच्यते॥दासनापि
तगोपालकुलमित्रार्धसीरिणः।भोज्यान्ना नापितश्चै
व यश्चात्मानं निवेदयेदिति।तथाः ध्याये ४ विशुद्धा
न्वयसम्भूतो निवृत्तो मद्यमांसतः।द्विजभक्तो वणि
ग्वृत्तिः सच्छूद्रः प्रकीर्त्तितः इति॥एवमेव·गोपनापितकु
म्भकारकुलमित्रार्धकृषिनिवेदितात्मानो भोज्यान्ना
इति मिताक्षरावचनम्॥एवं·शूद्रेषु दासगोपालकु
लमित्रार्धसीरिणः।भोज्यान्ना नापितश्चैव यश्चा।
त्मानं निवेदयेदिति योगियाज्ञवल्क्यः॥असच्छू।
द्रास्तु पात्रबहिष्कृता अभोज्यान्नाश्चाण्डालरज
कादयो ज्ञेयाः॥उक्तं चैतद्यमसंहितायां।रजक
श्चर्मकश्चैव नटो बुरुड एव च।कैवर्त्तमेदभिल्लाश्च स
प्तैते अन्त्यजाः स्मृताः॥भुक्त्वा चैषां स्त्रियो गत्वा पी
त्वापः प्रतिगृह्य च।कृच्छ्राब्दमाचरेज्ज्ञानादज्ञाना
दैन्दवद्वयमिति॥०एवमेव तत्र तत्र पराशरसंहिता
यामुक्तम्।वासांसि धावको यस्य पतन्ति जलबिन्द
वः।तत्पुण्यजलस्थाने रजकस्य शिलाङ्कितम्॥१॥
तत्र पीत्वा जलं विप्रः प्रमादात्तृट्परिपीडितः।तेन
सो विप्रमुक्तः स्यात् कुर्याच्चान्द्रायणव्रतम्।२।शैलूषीरज
कीं चैव नटीं च वेणुवारिनीं।गत्वा चान्द्रायणं कुर्या
त्तथा चर्मोपजीविनीम् ३ एवं·रजकाद्यम्बुपानेन प्र
जापत्यं बुधैः स्मृतम्।वानेजलेन तदर्धं तु शूद्रः स्या
त्पादकृच्छ्रकृत् ४ चाण्डालकूपपानेन महदेनः प्र
जायते।गोमूत्रयावकाहारः शुध्येत दिवसैस्त्रिभिः
५ शबराश्च पुलिन्दाश्च कैवर्त्ताश्च नटास्तथा।एता
न् रजकसंतुल्यान् केचिदाहुर्मनीषिणः ६ नभो
क्तव्यमभोज्यान्नं कन्दमूलफलादिकं।नपातव्यम

येयं च द्विजैः स्नानगर्हितम् ७ शूद्रान्नं ग्रासमेकोऽश्न
न्वै मासं मासार्द्धमेव वा तद्योनावेव जायेत सत्यमे
वं विदुर्बुधाः ८ आमं शूद्रस्य शूद्रान्नं मृतः श्वा चैव
जायते ॥ दग्धाहारमपाचोरो वा गृध्रः रुकारकुलस्ताः ।
९ इति पराशरः ॥ अग्नि अग्रमालमेन न्यस्य संये शूद्राः पा
पचारिणः ॥ तस्मात्कूदसमीपेऽवनाश्नेनत्र्यकसंचन १
न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतं न चास्यो
पदिशेद्धर्मं न चास्य व्रतमादिशेत् २ यश्चास्योपदिशे
द्धर्मं यश्चास्य व्रतमादिशेत् । सोऽसंवृतं नाम तमो घोरं सह तेन
प्रपद्यते ३ इति वसिष्ठसंहितायां यमः ॥ एतत्सर्वं मन
स्कृत्य परं मन्त्रम् न स स्वृष्टेः सार्ववर्णिकं भैक्षचरण
मिति गौतमादिवचनात् शूद्रोऽपि वेदसम्पन्नो द्विजो
भवति संस्कृतः स्यादिभावनाच्च अथ ब्रह्मचार्या
दिसाधारणधर्माणि ॥ स्नानकृत्याय विधिपूर्वकमलमू
त्रविसर्जनं उ लिङ्गशुद्धाः सर्वे पक्षं गं घर्वकिन्नराः ।
पिशाचा गुह्यका श्चैव मलमूत्रं करोम्यहम् इति मंत्र
पाठानन्तरमुत्तराद्यभिमुखः कुर्यात् । नरो हमन्त्रः
मूत्रोच्चारसमुत्सर्गं दिवा कुर्यादुदङ्मुखः । दक्षिणा
भिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा ॥ छायायाम
न्धकारे वा रात्रावहनि वा द्विजः । यथा सुखमुखः
कुर्यात् प्राणबाधाभयेषु च ॥ प्रत्यग्निं प्रतिसूर्यं च प्र
तिसोमोदकद्विजान् । प्रतिगां प्रतिवातं च प्रज्ञा नश्य
ति मेहतः ॥ एतदन्तरं शुद्ध्यर्थमाहरेदेकां लिंगे गुदे ति
स्रः तथैककरे दश । उभयोः सप्त दातव्या मृदः शु
द्धिमभीप्सता स्यादि ॥ अस्यार्थः मूत्रपुरीषोत्सर्गे स
ति शुद्धिमभीप्सता जलसहिता मृदेका लिंगे दातव्या
। गुदे तिस्रो मृदः । तथैकस्मिन्करे वामे दश मृदो दा
तव्याः । ततउभयोः करयोः सप्त दातव्याः । शौचविद्

स्मिणंहस्तंनाधः शौचेनियोजयेत् तथैववामहस्तेन
नाभेरूर्ध्वंनशोधयेदितिदेवलस्मरणाद्वामकरस्यै
वःशौचसाधनत्वंमंगलस्यम्॥यदानुक्तशौचेनापिगं
धलेपक्षयोनभवति तदापादद्वयेत्यमेध्यान्तादिति
वचनादधिकसंख्याअपिमृद्दानस्याएतद्विषयत्वे
वस्तुनीनामधिकमृत्संख्यावचनानि॥यदानुक्तसंख
याअल्पेनापिगंधलेपक्षयोभवतितदापिसंख्याव
त्वारंभसामर्थ्यात्संख्यापूरयितव्यैवेति॥अथोस्या
पमुखनेत्रादिकंप्रक्षाल्यपश्चात् नांगभूतंसमंत्रंदन्त
धावनंकुर्यात्।तच्चदन्तकाष्ठंस्यात्तदग्रेणप्रधाव
येत्॥उत्थायनेत्रेप्रक्षाल्यशुचिर्भूत्वासमाहितः।परि
जप्यचमंत्रेणभक्षयेद्दन्तधावनम्॥अत्रमंत्रः ॐआ
युर्बलंयशोवर्चः प्रजापशून्वसूनिच। ब्रह्मप्रज्ञां
चमेधांच त्वन्नोदेहिवनस्पते इत्यादिकात्यायनसं
हितायामुक्तम्॥अयंस्नानपूर्वांगत्वात्।अविहि
तस्नानकालेतुयः कुर्याद्दन्तधावनम्।पापीयान्तौ
रवेयातिपितरश्चापहृतोद्विजदूनिवहत्यता।इतिस्मर
णात्तस्नानसमकालेदन्तधावनंनकार्यमिति॥अ
त्रदन्तधावनविधिश्च।कंटकिक्षीरवृक्षोत्थंद्वाद
शांगुलसंमितम्।कनिष्ठिकाग्रवत्स्थूलंपर्वार्ध
कृतकूर्चकम्॥दन्तधावनमुद्दिष्टंजिह्वोल्लेखनि
कातथेति अत्रस्मृतौवृक्षोत्थं मित्यनेनतृणलोष्ट
गुल्मादिनिषेधः।पलाशाश्वत्थादिनिषेधश्चस्मृ
त्यन्तरोक्तोद्रष्टव्यः॥दन्तधावनमत्र ब्रह्मचारिभि
न्नानांधर्मोज्ञेयः।दन्तधावननृत्यगीतादिब्रह्मचारी
वर्जयेदिति।तन्निषेधादितितुभिन्नाश्रमाणामुक्तमिति॥
तथात्राहहारीतः।तस्मात्क्षुप्तकमध्याद्वा भक्षयेद्दन्त
काष्ठकम्।करंजंखादिरंवापि कदंबंकरवीरंतथा॥१॥

सप्तपर्णः पृश्निपर्णी जम्बुर्निम्बस्तथैवच । अपामार्गो
बिल्वं चार्कं चोदुम्बरमेवच ॥ २ ॥ एते प्रशस्ताः क
थिताः दन्तधावनकर्मणि । दन्तकाष्ठस्य भक्षस्य स
मासेन प्रकीर्त्तितः ॥ ३ ॥ सर्वे कंटकिनः पुण्याः क्षीरि
णश्च यशस्विनः । अष्टाङ्गुलेन मानेन दन्तकाष्ठ
मिहोच्यते ॥ ४ ॥ प्रदेशमात्रमथवा तेन दन्तान्वि
शोधयेत् । प्रतिपत्पर्वषष्ठीषु नवम्यां चैव सत्तमाः ॥
५ ॥ दन्तानां काष्ठसंयोगा दहत्यासप्तमं कुलम् ॥
अभावे दन्तकाष्ठानां प्रतिषिद्ध दिनेषु च ॥ ६ ॥ अ
पां द्वादश गण्डूषैर्मुख शुद्धिं समाचरे दित्यादि
ना । ततो मंत्र पूर्वक विधियुक्तः श्रद्धाभक्तिसम
न्वितः । समाहित चित्तः तीर्थ प्रार्थनादियुक्तः न
द्यादिषु स्नानं कुर्य्यात् । तथाह्यादौ तीर्थोपत्रणामं
कुर्य्यात् ॥ ततॐ मद्य श्री ब्रह्मणो द्वितीय परार्द्धे
श्री श्वेतवाराह कल्पे सप्तमे वैवस्वत मन्वन्तरे
अष्टाविंशति तमे कलियुगे कलि प्रथमचरणे
जम्बूदीपे भारतखण्डे आर्य्यावर्त्ते अमुक
तीर्थे अमुक सम्वत्सरे मासानां मासोत्तमे मा
से अमुक मासे अमुक पक्षे अमुक तिथौ
अमुक वासरे ईश्वर प्रीत्यार्थे अमुक ना
माऽमुक गोत्रोत्पन्नः प्रातःस्नान महं करिष्ये
इति संकल्पः । ततो वक्ष्यमाण मंत्रेण तीर्थमृ
त्तिकां परिगृह्य मस्तकादि सर्वाङ्गेषु प्रलेपयेत्
। ततः सूर्यं प्रणम्य पूर्वाभिमुखः ॐ गङ्गे च यमु
ने चैव गोदावरि सरस्वति नर्मदे सिन्धु कावे
रि जलेऽस्मिन्सन्निधिं कुरु । इति मंत्रेण सर्वं ज
ले उक्त तीर्थ सन्निधान परः स्नः ॥ स्नात्र तु जले
तु ॐ नमो विष्णुरूपाय नमो विष्णुपरायणे ।
सान्निध्यं कुरु देवेश साग

रेलवणाम्भसीतिमंत्रेणसामुद्रप्रार्थनापूर्वकः॥गंगा
दितत्तीर्थेतु तत्तीर्थप्रार्थनापूर्वकोवाःप्रक्षस शिरो
निमज्जेत्पुनःपुनः॥ततःआचम्यार्द्रसकेशःस्वगा
त्रोनिस्रवेज्जलात्।नवस्त्रादिनाजलंप्रमार्जयेत्ता
पिकत्यादिवस्त्रजलंतीर्थजलेपादेवाप्रक्षिपेदिति॥९॥
नत्सर्वमाहपराशरः॥तथाहि।जलावगाहनंस्नानंनि
त्यंसर्वेषुवर्णिषु।प्रातेरहरहःकार्यंतत्स्नानंविधिकः
स्मृते॥१॥गोशकृन्मृत्कुशाश्चैव पुष्पाणिपत्रिकांतथा
स्नानार्थीप्रयतोनित्यंस्नानकालेसमाहरेत्॥२॥स्वम
नोऽभिमतंतीर्थं गत्वाप्रक्षाल्यपद्द्वयम्।हस्तौचाचम्य
विधिवत् शिखांबद्ध्वैकचेतसा॥३॥मृदम्बुभिःस्वगा
त्राणिक्रमात्प्रक्षालयेदथ।पादौजंघेकटिंचैव क्रमान्मृ
दम्बुभिस्त्रिभिः॥४॥प्रक्षाल्यहस्तावाचम्य नमस्कृ
त्यचतज्जलम्।गृहीत्वागृह्यसूत्रेणदत्तपुष्पाप्रयताञ्ज
लिः॥५॥ॐह्रीतिचमंत्रेणकुर्यादापोभिमंत्रणम्॥अ
त्रार्धश्लोकसंगृहीतत्वादत्रांकंनष्टम् एवमग्रेपिस
र्वत्रज्ञेयम्॥यत्रस्थानेषुयत्तीर्थं नदीपुण्यतमानथा
गंगादिपुण्यतीर्थानिकृत्रिमादिषुसंस्मरेत्॥६॥नत्रा
येन्मनसावापि तीर्थमन्यत्रचिन्तयेत्।महाव्याहृतिभिः
पश्चादाचमेत्प्रयतोपिसन्॥७॥स्नानकर्मान्तकेमं
त्रैस्तैरप्यम्बुदैवतैः॥स्नात्वात्मानंनिमज्ज्याथआचा
न्तस्त्वन्यदाचरेत्॥८॥चिद्रूपंपरमंज्योतिःनिरालं
म्बमनामयम्।अव्यक्तमव्ययंशान्तं स्नायाद्वापिहरिं
स्मरन्।९।गायत्रींवारिसंस्नातःप्रणवेनिर्मलीकृ
तः॥विष्णुस्मरणसंशुद्धोयोग्यःसर्वेषुकर्मसु॥१०॥
भावपूतःपवित्रःस्यात् मंत्रपूतस्तथानरः॥उभयेन
पवित्रस्तुनित्यस्नायीशुचिर्नरः॥११॥ ❀॥ ❀॥

मत्स्या विपद्यन्ते ह्युदके च। नित्यनोऽपि न ते स्नानफलं नैव प्राप्नुवन्ति मृताः॥१२॥ विधिहीनं भावदुष्टं कृतमश्रद्धया पि यत्। तद्धरंत्यसुरास्तस्य मूढत्वाद्दुष्कृतात्मनः॥१३॥ श्रद्धाविधिसमायुक्तं यत्कर्म क्रियते नृभिः। सुचिभिरेकचित्तैश्च तदानन्त्याय कल्पते॥१४॥ यच्च स्नात्वा शुभे शौचे यज्जलं देहरोमसु। न हस्ताभ्यां न वस्त्रेण जलं विद्वान्समार्जयेत्॥१५॥ मार्जिते पितरस्तोये सर्वे अपि हि देवताः। तथा सर्वे मनुष्याश्च त्यजन्त्याप्यायनं द्विजं॥१६॥ स्नातुः सेवन्ति तत्सर्वे तीर्थे पितृदिवौकसः। ततोऽन्यद्यद्यसौ गच्छेत् शिराश्चालेशयं निहि॥१७॥ प्रातःस्नानार्थिनस्तीर्थे चिन्तितं तज्जलाशयम्। तद्देहमुपतिष्ठन्ति तृप्तये पितृदेवताः॥१८॥ अतोऽनचिन्तयेत्तीर्थे क्षेत्रेदेवतु चिन्तितम्। देवखातनदीस्रोतः सरःसु स्नानमाचरेत्॥१९॥ न स्नायात्स्तुभितास्वप्सु न स्वयं क्षोभयेच्च ताः। न निर्गतासु तीर्थाच्च पतन्तीष्वाहतासु च॥२०॥ रविसंक्रान्तिवारेषु ग्रहणे च शशिक्षये। अन्तेषु चैव षष्ठीषु न स्नायादुष्णवारिणा॥२१॥ स्वभावाभिरनुष्णाभिः संहेमाभिस्तथा द्विजाः। नवाभिर्निर्दशाहाभिरसंस्पृष्टाभिरन्यजैः॥२२॥ यः स्नानमाचरेन्नित्यं तं मन्ये संतिदेवताः। तस्माद्दुर्गुणं स्नानं सदा कार्यं द्विजातिभिः॥२३॥ उषस्युषसि यत्स्नानं क्रियतेऽनुदिते रवौ। प्राजापत्येन तत्तुल्यं महापातकनाशनम्॥२४॥ प्रातरुत्थाय यो विप्रः प्रातःस्नायी सदा भवेत्। सर्वपापविनिर्मुक्तः परं ब्रह्माधिगच्छति॥२५॥ अत्र स्नानं सप्तविधं ज्ञेयम्। मान्त्रं पार्थिवमाग्नेयं वायव्यं दिव्यमेव च। वारुणं मानसं चेति सप्त स्नानान्यनुक्रमात्॥२६॥ शंन्न आपस्तु मान्त्रं मृदालंभं तु पार्थि

वम्।भस्मनास्नानमाग्नेयं गवांरेणुभिरनिलम्॥२७॥
॥आतपेसतियावृष्टिः तद्दिव्यंस्नानमुच्यते।बाह्यैर्नद्या
दिकेस्नानंवा रुणंतत्प्रकीर्तितम्॥२८॥यद्ध्यानंमनसा
विष्णोर्मानसंकथ्यतेबुधैः।असामर्थ्येतुकायस्य काल
शक्त्याद्यपेक्षया॥२९॥सर्वाणिफलतुल्यानि स्मृतिस्त्या
हपराशरः।स्नानानांमानसंस्नानं मन्वाद्यैःपरमंस्मृत
म्॥३०॥ॐअश्वक्रान्तेरथक्रान्ते विष्णुक्रान्तेवसुंधरे।
मृत्तिकेहरमेपापं यन्मयापूर्वसंचितम्॥३१॥इत्यादिपा
र्थिवादिस्नानेमंत्राज्ञेयाः।एवंजलमध्येतुयः कश्चित्
ब्राह्मणोह्यानदुर्बलः।निष्पीडयतिवैहस्तं स्नानं
तस्यवृथाभवेत्॥३२॥वाङ्मनोजलशौचानि सदा
येषांद्विजन्मनाम्।त्रिभिःशौचैरुपेतोयः सस्वर्ग्योना
त्रसंशयः॥३३॥एतत्सर्वंमनःशुद्ध्यर्थंतद भावेतुनि
ष्फलमित्याह॥स्त्रियंपरिरंसुर्द्रविणंजिहीर्षुर्वधंचि
कीर्षुर्मनुजःपरस्य।विचक्षुरत्यन्तमवाच्यवाक्यंक
थंसमृद्धिंसमुपैतिशौचात्॥३४॥किंनिष्कामस्यना
रीभिः किंगनासोश्वभेषजैः।जितेंद्रियस्यकिंशौचै
र्निष्फलैर्मूर्खदत्तवत्॥३५॥इत्यादिपराशरसंहिता
यांस्नानविचारः।अत्रप्रातरुत्थायघोविप्रः प्रातः
स्नायीभवेन्नरः।सप्तजन्मकृतंपापंत्रिभिर्वर्षैर्व्य
पोहति॥१॥उषस्युषसियत्स्नानंसन्ध्यायामुदिते
रवौ।प्राजापत्येनतत्तुल्यं महापातकनाशनम्॥२॥
प्रातःस्नानंप्रशंसन्ति दृष्टादृष्टकरंहितत्।सर्वमर्हति
पूतात्मा प्रातःस्नायीजपादिकम्॥३॥इतिदक्षः॥अ
त्र॥मासद्वयंश्रावणादि सर्वानद्योरजस्वलाः।तासु
स्नानंनकुर्वीत वर्जयित्वासमुद्रगाः॥१॥नदीलक्ष
णं॥धनुःसहस्राण्यष्टौतुगतिर्यासांनविद्यते।नता
नदीशब्दवहा गर्तास्ताःपरिकीर्तिताः॥२॥उपाकर्मे

णि चोत्सर्गे प्रेतस्नाने तथैव च। चन्द्रसूर्यग्रहे चैव र
जोदोषान्विदाने॥३॥ वेदाश्छन्दांसि सर्वाणि ब्रह्मा
द्याश्च दिवौकसः। जलार्थिनोऽथ पितरो मरीच्याद्या
स्तथर्षयः॥४॥ उपाकर्मणि चोत्सर्गे स्नानार्थं ब्रह्म
चारिनः। पिपासूननुगच्छन्ति सन्तुष्टाः स्वशरीरिणः
॥५॥ समागमस्तु यत्रैषां तत्र हत्यादयो मलाः। नूनं स
र्वे क्षयं यान्ति किम्पुनैकं नदीरजः॥६॥ इति कात्याय
नसंहिता॥ ॥अथ पराशरोक्तरीत्या जपविधिरुच्य
ते॥ प्रथमतो विधिपूर्वकं बद्धासनः सन् ॐ भूः ॐ भुवः
ॐ स्वः इति मंत्रेण वारत्रयमाचम्य जपं कुर्यात्समा
हितः॥ छन्दो दैवतमार्षं च विनियोगं च ब्राह्मणम्॥
मंत्रं पंचविधं ज्ञात्वा द्विजः कर्म समाचरेत्। स्वरतो
वर्णतश्चैव परिपूर्णं भवेद्यथा॥१॥ हीनं नैव प्रयुंजी
त मंत्रं तु मात्रयापि च। देवतायतने कुर्यात् जपं न
द्यादिकेषु च॥२॥ आश्रमेषु यतीनां च गोष्ठे वा स्वगृहे
पि वा। चतुर्थं न्तिमपूर्वेषु ह्युत्तमादिक्रमेण तु। दशगुण
सहस्रं स्यात् फलं विष्णावनन्तकम्॥३॥ असमीपे ज
पं कुर्यात् ससंख्यं तद्भवेद्यथा॥ असंख्यमासुरं यस्मा
त्तस्मात्तद्गणयेद्ध्रुवं॥४॥ स्फाटिकाब्जाक्षरुद्राक्ष
पुत्रजीवसमुद्भवैः। अक्षमाला प्रकर्त्तव्या प्रशस्ता
चोत्तरोत्तरा॥५॥ अभावे त्वक्षमालायाः कुशग्रन्थ्या
थ पाणिना। यथा कथंचिद्गणयेत्ससंख्यं तद्भवेद्य
था॥६॥ न जपं प्रसभं कुर्यात् प्रसभं घ्नन्ति राक्षसाः।
ब्राह्मणा भागधेयं तु तेषां चैव विधिः कृतः॥७॥ उपां
शु तु जपं कुर्यात् ब्राह्मणो वाग्यमानसम्। विघ्नेनोप
पांशुः स्याद् चलोष्ठं च मानसम्॥८॥ द्विविधस्तु ज
पः प्रोक्तः उपांशुर्मानसस्तथा। उपांशुः स्याच्छतगु
णः साहस्रो मानसः स्मृतः॥९॥ उपांशुजपयुक्तस्य

मानसेचरतस्तथा। दृष्टैवास्यानि विविधमितिदा।
राशरोवरन्॥१०॥विधियज्ञाः पाकयज्ञाःयेचा
न्येवहवोमखाः।सर्वेतेजपयज्ञस्य कलांनार्हन्तिषो
डशीम्॥११॥जप्येनैवतुसिद्धेन। किंनसिद्धंभवेदि
ह।कुर्यादन्यन्नवाकुर्यान्मैत्रोब्राह्मणउच्यते॥१२॥
शतेनजन्मजनितं सहस्रेणपुराकृतम् अयुतेनत्रि
जन्मोत्थंगायत्रीहन्तिपातकम्॥१३॥अस्मिन्कलौच
विदुषा विधिवत्कर्मयत्कृतम्।भवेद्दशगुणंतत्तु
कृतादेर्युगतोधिकम्॥१४॥नचत्वरन्वक्षानेकर्तुं मं
त्राम्नायस्यदूषणात्।अयथार्थकृतान्यापात् मंत्रसि
द्धिर्गरीयसी॥१५॥नचंक्रमन्नचहसन्न पार्श्वमवलोक
यन्।नाप्याश्रितोनजल्पंश्चनचैवोर्ध्वशिरास्तथा॥
१६॥नांघ्रिणापीडयन्पादं नचैवहिकरावपिनैवं।
विधंजपंकुर्यात् नचसंचालयेत्करम्॥१७॥प्रच्छन्ना
निचदानानि ध्यानंचनिरहंकृतम्।जप्यानिचसंगुप्ता
नि तेषांफलमनंतकम्॥१८॥यएवमभ्यसेन्नित्यं ब्रा
ह्मणःसंयतेन्द्रियः।ब्रह्मलोकमवाप्नोति ध्यानादेव
चैनादपि॥१९॥नतन्मंत्रैर्देवताध्यानार्चनपूर्वकंत
न्मंत्रजपंकुर्यान्महत्फलसिद्धये।तत्स्वर्थैःतथाहि
॥ब्रह्माणंवैधसैर्मंत्रैः विष्णुंसैवैःशंकरंस्वकैः।अन्या
न्पितथादेवानर्चयेन्निजमंत्रकैः॥२०॥मंत्रन्या।
संपराकृत्वास्वदेहेदेवतासुच।गायत्र्योंकारन्यस्ता
ङ्गः पूजयेद्विष्णुमव्ययम्॥२१॥विष्णुरादिरयंदेवः
सर्वामरगणार्चितः।नामग्रहणमात्रेण पापराशि
छिनत्तियः॥२२॥तदर्चनंप्रवक्ष्यामि विष्णोरमित
तेजसः।तज्ज्ञात्वामुनयःसर्वे विष्णोःसायुज्यमा
प्नुयुः॥२३॥षट्स्वमीषुहरेःसम्यगर्चनंमुनिभिःकृ
तम्।अप्स्वग्नौहृदयेसूर्ये स्थण्डिलेप्रतिमासुच॥

रिकं तु सदा पावनम्। तदुक्तं योगियाज्ञवल्क्येन· मुख
जा विप्रुषो मेध्यास्तथाचमनबिन्दवः। श्मश्रु चास्यगं
तं दन्तसक्तं त्यक्त्वा ततः शुचिरिति॥ अस्यार्थः मुखेजा
ताः मुखजाः श्लेष्मविप्रुषो मेध्या नोच्छिष्टं कुर्वन्ति। अ
निपतितश्च देहे। न मुखविप्रुष उच्छिष्टं कुर्वन्ति न चेद
ङ्गे पतन्तीति गौतमस्मरणात्। तथाऽऽचमनतोयबि
न्दवः पादादौ स्पृशन्तोऽपि मेध्याः॥ श्मश्रु चास्यम वि
ष्टमुच्छिष्टं न करोति॥ दन्तसक्तं चान्नादिकं स्वयमेव च्युतं
त्यक्त्वा शुचिर्भवति। अच्युतं तु दन्तसमम्· तथाह गौतमः
॥ दन्तश्लिष्टं तु दन्तवदन्यत्र जिह्वाभिमर्शनादिति॥ अत्र
रजकाद्यन्त्यजानां॥ संकरजातिविशेषाणां यवनानां च
परस्परमुच्छिष्टभक्षणं कर्म प्रसिद्धं। तत्तु क्वचिद् गृहस्थे
षु साधुषु च न तु लोके शिष्टानां दृष्टचरम्। तन्न कर्तव्यमा
र्यैः बहुस्मृतिविरोधात्॥ उक्तमेतद्बृहद्विष्णुना॥ ब्राह्म
णः शूद्रोच्छिष्टाशने सप्तरात्रं पञ्चगव्यं पिबेत्। वै
श्योच्छिष्टाशने पञ्चरात्रम्। राजन्योच्छिष्टाशने त्रि
रात्रम्। ब्राह्मणोच्छिष्टाशने त्वेकाह इति एतत्काम
कारविषयं ज्ञेयम्॥ यत्तु यमवचनं॥ भुक्त्वा सह ब्राह्म
णेन प्राजापत्येन शुध्यति॥ भूभुजा सह भुक्त्वान्नं तप्त
कृच्छ्रेण शुध्यति॥ वैश्येन सह भुक्त्वान्नमतिकृच्छ्रेण
शुध्यति॥ शूद्रेण सह भुक्त्वान्नं चान्द्रायणमथाचरेदि
ति तत्कामतोऽभ्यासविषयम्॥ यत्पुनः शंखवचन
म्॥ ब्राह्मणोच्छिष्टाशने महाव्याहृतिभिरभिमन्त्र्यापः
पिबेत्॥ क्षत्रियोच्छिष्टाशने ब्राह्मीरसविपक्वेन त्र्यहं
क्षीरेण वर्तयेत्॥ वैश्योच्छिष्टभोजने त्रिरात्रोपोषितो
ब्राह्मीसुवर्चलां पिबेत्॥ शूद्रोच्छिष्टभोजने षड्रा
त्रमभोजनमिति तत्त्वकामविषयम्॥ तत्राभ्यासे द्वै
गुण्यादिकं कल्प्यम्॥ एतच्च गुरुपित्रादिव्यतिरेकेण

॥पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोज्यमित्यापस्तम्बस्म
रणात्॥ सत्तुत्वहस्मासवचनम्॥ माता वा भगिनी वापि
भार्या वान्या अपोषितः। ताभिः सह भोक्तव्यं भुक्त्वा
चान्द्रायणं चरेदिति तत्सहभोजनविषयम्॥ उच्छि
ष्टमात्रभोजने तु॥ शूद्रोच्छिष्टभोजने सप्तरात्रमभोज
नं स्त्रीणां चेत्यापस्तम्बोक्तं द्रष्टव्यम्॥ यत्त्वङ्गिरोवच
नं ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं वा कदाचन त
त्र दोषं न मन्यन्ते सर्वे एव मनीषिण इति। तद्विवाहवि
षयमापद्विषयं वा॥ अंत्यजोच्छिष्टभोजने तु। अंत्य
नां भुक्तशेषं तु भक्षयित्वा द्विजोत्तमः चान्द्रं कृच्छ्रं तद
र्धं च ब्रह्मक्षत्रविशां विधिरित्यापस्तम्बोक्तं विज्ञेयम्
॥ अन्त्यजोच्छिष्टभोजने तु चण्डालपतितादीना
मुच्छिष्टान्नस्य भक्षणे चान्द्रायणं चरेद्विप्रः क्षत्रः स
न्तपनं चरेत्। षड्रात्रं च त्रिरात्रं च वर्णयोरनुपूर्व
शः इत्यङ्गिरोवचनम्॥ आपदि तु। आपत्काले तु
विप्रेण भुक्तं शूद्रगृहे यदि। मनस्तापेन शुध्येत्तु द्रु
पदानां शतं जपेदिति पराशरोक्तं ज्ञेयम्॥ यत्तु दी
नशेषं तु यत्किंचित् भोजने मुखनिःसृतम्॥ त्रिरा
त्रं तु व्रतं कुर्याद्वामहस्तेन वा पुनः॥ इति॥ वृद्धशा
तातपोक्तं॥ तद्बुद्धिपूर्वविषयम्॥ अकामतस्त्वर्ध
कल्प्यम्॥ रजकादिभाण्डगतजलपाने तु॥ भाण्डस्थ
मन्त्यजानां तु जलं दधि पिबेद्यदि। ब्राह्मणः क्षत्रि
यो वैश्यः शूद्रश्चैव प्रमादतः॥१॥ ब्रह्मकूर्चोपवा
सेन द्विजातीनां तु निष्कृतिः॥ शूद्रस्य चोपवासेन
तथा दानेन शक्तितः॥ इति॥ पराशरोक्तं वेदितव्यम्॥
कामतस्तु द्विगुणं॥ उच्छिष्टपंक्ति॥ भोजनेऽप्येतदेव
॥ यस्तु भुंक्ते द्विजः पंक्त्यामुच्छिष्टायां कदाचन॥ अ
होरात्रोषितो भूत्वा पंचगव्येन शुध्यतीति॥ क्रतुस्म

॥२४॥ अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम्। प्रति
मास्वल्पबुद्धीनां योगिनां हृदये हरिः॥२५॥ आपो ह्यायत
नं तस्य तस्मात्तासु हरिः सदा। सर्वगत्वेन विष्णोस्तु स्थं
डिले भावितात्मनाम्॥२६॥ द्यात्पुरुषसूक्तेन आपः पु
ष्पाणि चैव हि। अर्चितं स्यादिदं तेन विश्वं भुवनसप्तकं॥२७
॥ एवं तत्तन्मंत्रेण तत्तद्देवताध्यानार्चनं ज्ञेयम्॥ एतत्सर्वं वृह
न्नारदीयसंहितायामुक्तमायम्॥ स्वकृतं जपतपोव्रतदाना
दिकं सर्वकर्म न कस्मैचित्प्रकाशयेत्। इन्द्राय प्रकाशना
द्देवपुण्यक्षयेति धर्मयुक्तो राजा ययातिः स्वर्गात्पतितः॥
तदुक्तमपि। कर्मतो धर्मजलस्पर्शात् करतोयाविलंघना
त् गंडकीबाहुतरणात् धर्मक्षरति कीर्तनादिति॥ एवम
न्यत्रापि॥ न विस्मयेत तपसा वदेदिष्ट्वा च नानृतम्। ना
र्त्तोऽप्यपवदेद्विप्रान् न दत्त्वा परिकीर्त्तयेत्॥१॥ यज्ञोऽ
नृतेन क्षरति तपः क्षरति विस्मयात्। आयुर्विप्रापवादे
न दानं च परिकीर्तनादित्युक्तम्॥२॥ अथ सन्ध्यादि
नित्यनैमित्तककर्मानन्तरम् उत्थाननमस्कारमार्ज
नादिविधियुक्तः समाहितचित्तो हस्तपादादि सर्वे
न्द्रियं जलेनार्द्रं कृत्वा पूर्वाद्यभिमुखः सन् मौनेनान्नं
भक्षयेत्॥ पुरीषे मैथुने होमे॥ प्रस्रावे दन्तधावने॥ स्ना
ने भोजनजाप्येषु सदा मौनं समाचरेत्। यस्तु संवत्स
रं पूर्णं भुंक्ते मौनेन सर्वदा॥१॥ युगकोटिसहस्रेषु स्व
र्गलोके महीयते। इत्यत्रिस्मरणात्। अत्रैव मनुराह। आ
र्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत्। आर्द्रपादस्तु भु
ञ्जानो दीर्घमायुरवाप्नुयात्॥१॥ न कुर्वीत वृथा चेष्टां
न वार्यञ्जलिना पिबेत्। नोत्संगे भक्षयेद्भक्ष्यान् न जातु
स्यात्कुतूहली॥२॥ न भिन्नभाण्डे भुञ्जीत न भावप्रति
दूषिते॥ शयनस्थो न भुञ्जीत न पाणिस्थं न चासने॥३
॥ अस्य शय्याद्यवस्थितो न भुञ्जीत॥ हस्ते प्रभूतमन्नं॥

कृत्वाक्रमेणनखादयेत्॥आसनेभोजनपात्रंनिध
यनभुञ्जीतेत्यर्थः॥आयुष्यंप्राङ्मुखोभुंक्ते यशस्यं
क्षिणामुखः।श्रियंप्रत्यङ्मुखोभुंक्ते ऋतंभुंक्तेह्युद
ङ्मुखः॥४॥उपस्पृश्यद्विजोनित्यमन्नमद्यात्समा
हितः।भुक्त्वाचोपस्पृशेत्सम्यग् अद्भिःखानिचसंस्पृशे
त्॥५॥पूजयेदशनंनित्यमद्याच्चैतदकुत्सयन्।दृष्ट्वा
हृष्येत्प्रसीदेच्चप्रतिनन्देच्चसर्वशः॥६॥पूजितंह्यशनं
नित्यंबलमूर्जंचयच्छति।अपूजितंतुतद्भुक्तमुभयंना
शयेदिदम्॥७॥अनारोग्यमनायुष्यमस्वर्ग्यंचातिभो
जनम्।अपुण्यंलोकविद्विष्टंतस्मात्तत्परिवर्जयेदित्या
दिना॥एवमादिपुराणेप्युक्तं।अन्नंदृष्ट्वाप्रणम्यादौ प्राञ्जलि
कथयेत्ततः।अस्माकंनित्यमस्त्वेतदिति भक्त्याथवन्द
येदिति॥तथाछान्दोग्योपनिषत्स्थपञ्चमप्रपाठकोक्तान्षड्
ग्रासरूपषड्यज्ञान्कृत्वैवमौनेनभुञ्जीत।ॐप्राणाय
स्वाहा॥१॥ॐव्यानायस्वाहा॥२॥ॐअपानायस्वाहा।
३॥ॐसमानायस्वाहा॥४॥ॐउदानायस्वाहा॥५॥
ॐआत्मनेस्वाहा॥६॥इतियज्ञामहत्फलदाः॥ब्रह्मा
र्पणंतुसर्वंब्रह्मैवेतिबुद्ध्या।ॐब्रह्मार्पणंब्रह्महविर्ब्रह्म
ग्नौब्रह्मणाहुतम्।ब्रह्मैवतेनगन्तव्यंब्रह्मकर्मसमा
धिनेतिसंकल्प्यभोजनमिति॥परन्त्वेतत्कर्मानन्तरं।
ॐप्राणायस्वाहाइतिमन्त्रेणप्राणायजलरूपाहुतिंहु
त्वापश्चाद्ग्रसेत्॥प्रथमकल्पेउक्तषड्विधयज्ञाद
दावुक्तमन्त्रेणजलदानंप्राणेभ्योदेयः॥ननग्नशिर
कटीवस्त्रमात्रेणभुञ्जीत।नापिवेष्टितशिराःशुचि
वस्त्रेणभुञ्जीत॥एकवासानभुञ्जीतनभुञ्जीतोत्क
टासनेइत्यादिपाद्मेशेषस्मरणात्॥भोजनानन्तरंज
लेनमुखहस्तपादादिसर्वाङ्गानिपरिमार्ज्य।ॐप्राणाय
स्वाहा इतिमन्त्रेणप्राणेभ्योजलंदेयम्॥मुखगतंश्लेष्म

रणात्॥ताम्रकरादिनाभुक्तपात्रभोजनेतु॥समुस्थि
नस्तु योभुंक्ते योभुंक्तेभुक्तभाजने॥एवं वैवस्वतःप्राह॥
भुक्त्वा स्नानपनं चरेदिति॥षड्विंशन्मतेकंठ्यम्॥न
थापराशरेणाप्युक्तम्॥आसनारूढपादस्तु वस्त्रस्या
र्धमधःकृतः॥यस्तुमुखेनयोभुंक्ते द्विजश्चान्द्रायणा।
च्छुचिः॥१॥उद्धृत्यवामहस्तेन किंचित्पिबति यो द्विजः॥
सुरापानेन तत्तुल्यं पीत्वा चान्द्रायणं चरेत्॥२॥नद्येकपं
क्त्युपविष्टानां विप्राणां सहभोजने॥यद्येकोपित्यजे
त्पात्रं शेषमन्नमभोजयेत्॥३॥मोहाद्भुञ्जीनय
स्तत्र पंक्त्यामुच्छिष्टभोजनः॥प्रायश्चित्तं चरेद्विप्रः
कृच्छ्रं सांतपनं तथा॥४॥पीतशेषं जलं पीत्वा भुक्त्वो
च्छिष्टमथात्मकम्॥अन्त्यामूत्रपुरीषेतु विप्रश्चान्द्रा
यणं चरेत्॥५॥इति॥फूत्कारोच्छिष्टमनुराह॥आ
सनारूढपादो वा वस्त्रार्धप्रावृतोपि वा॥मुखेन
धमितं भुक्त्वा कृच्छ्रं सान्तपनं चरेदिति॥एवं॥ना
ग्निं मुखेनोपधमेन्नग्नां नेक्षेत च स्त्रियम्॥नामेध्यं
प्रक्षिपेदग्नौ न च पादौ प्रतापयेदिति च॥अत्रास्ना
नभोजनादौ हारीत आह॥वहन्कमण्डलुं रिक्तं अ
स्नातःश्वैश्च भोजनम्।अहोरात्रेण शुद्धिः स्यात् द्वि
नजाप्येन चैव हीति॥स्नात्वा जप्त्वा च हुत्वा च शक्त्या
दत्त्वा च यःऽभुंते॥सोऽमृतं नित्यमश्नाति नस्यस्नान
मनामयम्॥अस्नात्वाऽश्नन्मलं भुंक्ते अजप्त्वा पूय
शोणितम्॥अजुह्वच्च कृमीन्कीटान् अदत्त्वा शकृत्
श्नातिपराशरः॥एवमेकपंक्त्युपविष्टानां॥स्नेहादिनावै
षम्येणदाननादोषमाह॥नपंक्त्यां विषमं दद्यात् न
याचेन्नचदापयेत्॥प्राजापत्येन कृच्छ्रेण मुच्यते क
र्मणस्ततः॥नदीसंक्रमहन्तुश्च कन्याविघ्नकरस्य च॥
समेविषमकर्तुश्च निष्कृतिर्नोपपद्यते॥त्रयाणामपि

चैतेषां मन्त्रापवित्रुमार्गेतां भैक्ष्यलब्धेन चान्नेन
द्विजश्चांद्रायणं चरेदिति॥ अत्र पराशरोप्याह॥ एके
कपंक्त्यां विषमं दद्याति स्नेहाद्वा यदि वार्थलोभा
त्॥ वेदेषु दृष्टं मुनिभिश्च गीतं तद्ब्रह्महत्यासदृशं वद
न्ति॥ तथा॥ परिवेशयेत्समं सर्वं पंक्तिभेदं न कारयेत्॥
पंक्तिभेदी वृथापाकी नित्यं ब्राह्मणनिंदकः॥ आदेशी
वेदविक्रेता पंचैते ब्रह्मघातकाः॥ देवान्पितॄन्मनुष्यांश्च
वह्निमभ्यागतांस्तथा॥ अनभ्यर्च्य च भुंजानो वृथापाक
इति स्मृत इति॥ एवं भोक्तृहस्तेऽप्यन्नं न देयं॥ हस्तदत्तास्तु
ये स्नेहाः लवणं व्यंजनानि च। दातारं नोपतिष्ठन्ति भोक्ता
भुंक्ते च किल्बिषमिति वशिष्ठवचनात्॥ तेन पतितादि
नैकपंक्तिभोजनेप्याह मार्कंडेयः॥ अपांक्तेयस्य यः क
श्चित्पंक्तौ भुंक्ते द्विजोत्तमः। अहोरात्रोषितो भूत्वा पंचग
व्येन शुध्यतीति॥ एवं॥ नाश्नीयात्संधिवेलायां न गच्छे
न्नापि संविशेत्। नचैव प्रलिखेद्भूमिं नात्मनोपहरेत्स्रज
मिति मनुवचनस्य संध्यादिकाले सर्वव्यवहारं परित्य
ज्यावश्यं जपध्यानपरः स्यादिति भावः॥ यज्ञादौ विहित
मांसं भक्षयेत्। निषिद्धमांसं न भक्षयेत्॥ तथाह मनुः॥
यज्ञाय जग्धिर्मांसस्येत्येष दैवो विधिः स्मृतः। अतोऽन्य
था प्रवृत्तिस्तु राक्षसो विधिरुच्यते॥१॥ यज्ञार्थं पशवः
सृष्टाः स्वयमेव स्वयंभुवा। यज्ञस्य भूत्यै सर्वस्य तस्माद्य
ज्ञे वधोऽवधः॥२॥ एष्वर्थेषु पशून्हिंसन्वेदतत्त्वार्थ
विद्द्विजः। आत्मानं च पशूंश्चैव गमयत्युत्तमां गतिं॥३॥
या वेदविहिता हिंसा नियतास्मिंश्चराचरे। अहिंसामेव
तां विद्याद्वेदाद्धर्मो हि निर्बभौ॥४॥ नाद्यादविधिना मांसं वि
धिज्ञोऽनापदि द्विजः। जग्ध्वा ह्यविधिना मांसं प्रेत्य तैरद्य
तेऽवशः॥५॥ यावन्ति पशुरोमाणि तावत्कृत्वो ह मारण।
म्। वृथापशुघ्नः प्राप्नोति प्रेत्य जन्मनि जन्मनि॥६॥ ना

कृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् । न च प्राणिव
धः स्वर्ग्यः तस्मान्मांसं विवर्जयेत् ॥७॥ समुत्पत्तिं च मां
सस्य वधबन्धौ च देहिनाम् । प्रसमीक्ष्य निवर्तेत सर्व
मांसस्य भक्षणात् ॥८॥ अनुमन्ता विशसिता निहन्ता
क्रयविक्रयी । संस्कर्ता चोपहर्ता च खादकश्चेति घा
तकाः ॥९॥ स्वमांसं परमांसेन यो वर्धयितुमिच्छति ॥
अनभ्यर्च्य पितॄन्देवान् ततोऽन्यो नास्त्यपुण्यकृत् ॥
१०॥ वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः । मांसानि
च न खादेद्यस्तयोः पुण्यफलं समम् इति ॥११॥ अन्नयो
गिय्याज्ञवल्क्यो प्राह ॥ वसेत्स नरके घोरे दिनानि
पशुरोमभिः । संमितानि दुराचारो यो हन्त्यविधिना प
शून् ॥१॥ सर्वान्कामानवाप्नोति हयमेधफलं तथा
। गृहेऽपि निवसन्विप्रो मुनिर्मांसविवर्जनादिति ॥ तथा
हुपराशरः । एकोऽब्दशतमश्वेन यजेत पशुना हिंसं
त्यन्यस्तु मांसमश्नाति स्वर्ग्यं प्राप्तिस्तयोः समा इति ॥ ए
वं मद्यानि पानकानि सर्वथा वर्ज्याणि ॥ ब्रह्महत्या
सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः
संसर्गश्चापि तैः सह ॥१॥ अनृतं च समुत्कर्षे राजगामि
च पैशुनम् । गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया
॥२॥ ब्रह्मोज्झता वेदनिन्दा कौटसाक्ष्यं सुहृद्वधः । ग
र्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षट् ॥३॥ निक्षेप
स्यापहरणं नराश्वरजतस्य च । भूमिवज्रमणीनां च रुक्म
स्तेयसमं स्मृतम् ॥४॥ रेतःसेकः स्वयोनीषु कुमारीष्व
न्त्यजासु च । सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः
॥५॥ इति मनुवचनात् ॥ धूम्रपानमप्येतत्सर्वं वर्ज्यम्
॥ धूम्रपानरते विप्रे दानं ददाति यो नरः । दातारो नरकं
यान्ति ब्राह्मणो ग्रामसूकर इति स्कन्दभविष्यद्वच
नात् ॥ सर्वमेतदन्यत्र सविस्तरं विज्ञेयम् ॥ अत्रनत्वम

एवं संचिन्त्य मनसा प्रेत्यकर्मफलोदयम्॥ मनोवाङ्मूर्ति
भिर्नित्यं शुभं कर्म समाचरेत्॥१॥ अज्ञानाद्यदि वा ज्ञाना
त्कृत्वा कर्म विगर्हितम्। तस्माद्विमुक्तिमन्विच्छन् द्वितीयं
न समाचरेदिति॥२॥ ॥यज्ञाद्यर्थं याचितधनेन स्वशरी
रपालनं संचयं वा न कुर्यात्। यज्ञार्थं लब्धमददद्भासः का
कोऽपि वा भवेदिति याज्ञवल्क्यस्मृतेः॥ यज्ञार्थमर्थं भिक्षि
त्वा यो न सर्वं प्रयच्छति। स याति भासतां विप्रः काकतां
वा शतं समा इति मनुस्मृतेः॥ लब्धं यज्ञार्थं यो विप्रो
न दद्यात्सर्वकर्मणि। स भासः काको गृध्रो वा श्मशा
ने निर्जले भवेदिति वृद्धपराशरस्मृतेश्च॥ यस्तु साधु
भ्योऽसाधुभ्यो वा ये केनाप्युपायेन धनं गृहीत्वा तत्स
र्वं पात्रेभ्यो ददाति सो महत्फलमवाप्नोति। योऽसाधु
भ्योऽर्थमादाय साधुभ्यः प्रयच्छति। स कृत्वा प्लवमा
त्मानं संतारयति तावुभौ॥ यद्वत्तं यज्ञशीलानां देवस्वं
तद्विदुर्बुधाः। अयज्वनां तु यद्वित्तमासुरस्वं तदुच्यते
इति मनुस्मरणात्॥ वस्तुतः परद्रव्याग्रहणमेव महा
फलदम्॥ प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम्। ये
लोका दानशीलानां स तानाप्नोति पुष्कलानिति॥ या
ज्ञवल्क्यस्मरणात्॥ एवं मनुरप्यर्थत्याग एव महत्त्व
माह। न जातु कामः कामानामुपभोगेन शाम्यति॥ हवि
षा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥१॥ यश्चैतान्प्राप्नुया
त्सर्वान् यश्चैतान्केवलांस्त्यजेत्॥ प्रापणात्सर्वकामा
नां परित्यागो विशिष्यते॥२॥ इत्यादिना॥ इति श्रीमन्निर्म
लब्रह्मदासपादपरिदृढेनोद्धवसिंहसंगृहीतब्रह्मचारिस्मृ
तिधर्मसंग्रहः समाप्तः॥१॥ ॥ ॐ समस्तस्मृतिकारे
भ्यः समस्तगुरुभ्यश्च नमो नमः॥ ॥अथ गृहस्थधर्मा
पि संगृह्यन्ते॥ तथाहि॥ चतुर्थमायुषो भागमुषित्वा
ऽऽद्यं गुरौ द्विजः। द्वितीयमायुषो भागं कृतदारो गृहे व।

सेत्॥१॥वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्।अवि
प्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत्॥२॥गुरुणानुम
तः स्नात्वा समावृत्तो यथाविधिः।उद्वहेत द्विजो भार्यां स
वर्णां लक्षणान्विताम्॥३॥चतुर्णामपि वर्णानां प्रेत्य चे
ह हिताहितान्।अष्टाविमान्समासेन स्त्रीविवाहान्नि
बोधत॥४॥ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽसु
रः।गांधर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः॥५॥अ
निन्दितैः स्त्रीविवाहैरनिन्द्या भवति प्रजा।निन्दितैर्निन्दि
ता नृणां तस्मान्निन्द्यान्विवर्जयेत्॥६॥एवं।अद्रोहेणै
व भूतानामल्पद्रोहेण वा पुनः।यावृत्तिस्तां समास्थाय वि
प्रो जीवेदनापदि॥७॥न लोकवृत्तं वर्तेत वृत्तिहेतोः कथं
चन।अजिह्मामशठां शुद्धां जीवेद्ब्राह्मणजीविका
म्॥८॥सन्तोषं परमास्थाय सुखार्थी संयतो भवेत्।सं
तोषमूलं हि सुखं दुःखमूलं विपर्ययः॥९॥इति गृह
स्थधर्मबीजभूता मनुस्मृतिः॥ ॥अथात्र वरलक्ष
णान्याह पराशरः॥जातिर्विद्या वयः शक्तिरारोग्य
बहुपक्षता।शीलं च वित्तसम्पत्तिरष्टावेते वरे गुणाः
॥१॥जातिर्विद्या च रूपं च शीलं चैव नवं वयः।आरो
ग्यत्वं विशेषेण पुंस्त्वं सम्यपि लक्षयेत्॥२॥सज्जा
तिं रूपवित्तं च तथा नववयः सदृढम्।सन्तोषजननं
स्त्रीणां सद्भावानाश्रयेद्वरम्॥३॥न जातिं न च विद्यां
च वित्तं नाचरणं स्त्रियाः।किन्तु ताः प्रीतिमिच्छन्ति
तस्मात्प्रीतिकरं श्रयेत्॥४॥कन्यायाश्च वरस्यापि य
थाभयोर्भवेद्धृतिः।तथा कन्यां वरं धीमान्वरयेद्वरा
शुद्धये॥५॥दूरस्थानामविद्यानां मुमुक्षूणां गरीय
साम्।शूराणां निर्धनानां च न देया कन्यका बुधैः
॥६॥नातिदूरे न चासन्ने अत्याढ्ये चातिदुर्बले।वृत्ति
हीने च मूर्खे च षट्सु कन्या न दीयते॥७॥ ॥अथ क

न्यालक्षणानि॥ वर्जयेदतिरिक्ताङ्गीं कन्यां हीनाङ्गरोगि
णीम्। सलोमां लोमहीनां च निर्वाचमतिवाग्मिनाम्॥
॥ पिङ्गलां कृष्णपिङ्गाक्षीं दुष्टवाचाकनिःस्वनाम्। स्थू
लाङ्गजानुपादां च सदाचाप्रियवादिनीम्॥९॥ स्वजा
मुद्वहेत्कन्यां सुरूपां लक्षणान्विताम्। अरोगिणीं सुशी
लां च तथा भ्रातृमतीमपि॥१०॥ सर्वावयवसंपूर्णाम स
गोत्रां कुलोद्भवाम्॥ हंससमानगमनां मृद्वङ्गीं च सुले
चनाम्॥११॥ सलज्जां शुभनासां च पतिप्रीतिकरीमपि॥
श्वश्रूश्वशुरयोर्भर्तुः शुश्रूषाकारिणीं प्रियाम्॥१२॥ अन्य
गोत्रकुलजातां तामनभिशस्तवंशजाम्। प्रचेद्दृशुभगन्यां
शुभमिच्छन्समुद्वहेत्॥१३॥ ऋतावृतौ स्त्रियं गच्छेत्स्त्री
च्छया वा वरं स्मरन्। सर्वेनहिच्छया कुर्यात् यथोभयो
र्वेहृतिः॥१४॥ भोज्यालंकारवासोभिः पूज्याः स्युः सर्वदा
स्त्रियः। यथा किञ्चिन्न शोचन्ति नित्यं कार्यं तथा नृभिः॥
१५॥ आयुर्वित्तं यशः पुत्राः स्त्रीभीत्यास्तु नृणां सदा। नश्य
न्तेनेनदृष्टेनैता संशयादसंशयम्॥१६॥ पाणिगृहीत
भार्यां यां सन्त्यजत्तु नराधमः। शूद्रीहस्तेन भुञ्जीत पति
तः स्यान्नश्यैव तु॥१७॥ त्यक्ता येनोढभार्या तु त्यक्तः स
पितृदैवतैः। त्यक्तो देवैः सपापी स्यात् शूद्रादप्यधमः
स्मृतः॥१८॥ यः शूद्रीं भजते नित्यं शूद्रीं च गृहमेधि
नीं। वर्जितः पितृदैवैश्च रौरवं याति सो द्विजः॥१९॥ स्त्रि
यो यत्र तु पूज्यन्ते सर्वदा भूषणादिभिः। पितृदेवमनु
ष्याश्च मोदन्ते नत्र वेश्मनि॥२०॥ स्त्रियस्तुष्टाः स्त्रियः सा
क्षात् रुष्टाश्च दुष्टदेवता॥ वर्धयन्ति कुलं तुष्टाः नाशय
न्त्यपमानिताः॥२१॥ नावमान्याः स्त्रियः सद्भिः पतिश्व
शुरदेवरैः॥ भ्रात्रा पित्रा च मात्रा च तथा बन्धुभिरेव
च॥२२॥ स्त्रियाश्चाप्यरूपस्यापि भवेद्यत्रोभयोर्धृति
नत्र धर्मार्थकामाः स्युः नदधीना यतस्त्वमी॥२३॥

षट्कर्माणि नृणां नित्यं येषां भार्या पतिव्रता। पतिलोकं
तु सा याति तत्पुण्येन यथावत्॥२४॥ पतिव्रता तु साध्वी
स्त्री अपि दुष्कृतकारिणम्। याति दिवं पतिं सुहृत्य केकी
व पतितोरगम्॥२५॥ जीवन्वापि मृतो वापि पतिरेव प्र
भुः स्त्रियः। नान्यास्ति देवता तासां पतिरेव सप्रार्थितः॥२६॥
न दिवापि स्त्रियं गच्छेद्द्विकं तदिच्छयापि च। न पर्वसु त
स्यासु नर्तौ रात्रिचतुष्टये॥२७॥ नोद्वयां न दिवां ग-
च्छेन्न सगर्भां व्रतस्थिताम्। अधिगच्छेद्विहाय स्वः नदा
सुः स्वप्ने मति च॥२८॥ भार्याधीनं सुखं पुंसां भार्याधी
नं गृहं धनम्। भार्याधीना सुतोत्पत्तिः भार्याधीनः सु
भोदयः॥२९॥ न गृहेण गृहस्थः स्यात् भार्यया कथ्यते
गृही। यत्र भार्या गृहं तत्र भार्याहीनं गृहं वनम्॥३०॥
गृही स्याद्गृहधर्मेण सर्वे पञ्चमखादिकैः। नहीनो न
गृहस्थः स्यात्कुर्यात्स्नात्वा तनन्ततः॥३१॥ अथ पुत्र
धर्मादिः॥ पुंनाम्नस्त्रायते यस्मात् नरकात्पुत्र उच्यते॥
यः पिता जातपुत्रस्य पश्येच्चेज्जीवतो मुखम्। सर्वे संस्कृ
ति माहुर्न्यस्य याति ब्रह्मणः पदम्॥३२॥ नैन प्राप्तं फलं
सर्वमैहिकामुष्मिकं च यत्। किं दत्तैर्दक्षिणैस्तीर्थैः न
वा भिर्वा समाधिभिः॥३३॥ सत्पुण्यकृत्तमो लोके यः
स पुत्रान्स्वरापुषः। विशेषेणापि धर्मं त्यक्त्वा परं ब्रह्म
विन्दति॥३४॥ पुत्रेण प्राप्यते स्वर्गो जातमात्रेण निश्चि
तम्। तस्मादिच्छन्ति सर्वेऽपि यथा चोपि च यांस्य पि॥३५॥
जनिष्यमाणानिच्छन्ति पितरः स्वकुले सुतान्। कश्चिद
न्वा गयायां नो दद्यात् पिण्डान्प्रदास्यति॥३६॥ यद्यन्यो
ऽश्वमेधेन नीलं मोक्षयति वारणम्। दानरो वा कुरुक्षेत्रे
स्नानी वा अथ भविष्यति॥३७॥ गुरु शौर्यैक वित्तो हि प्राणा
न्मोक्ष्यति गोगृहे। एवं वाम्पितृभिः सर्वे पुत्रेभ्यः सकलं फ
लम्॥३८॥ जीवतो वाक्यकरणात् क्षयाहे भूरिभोजना

न्। गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता ॥ ४९॥ दु
हिता पितृश्वासाध्वी श्वश्रुरयोरुपालिङ्गन्। पतिव्रता च
धर्मत्वात् पितरौ ह्युन्नतिं काङ्क्षतेत् ॥ ५०॥ स पिता स तु वै पु
त्रस्तस्मात् दुहिता पिता पुत्रश्च दुहिता चैभौ पितुः सन्त
ने कारकौ ॥ ५१॥ नन्तु नः पावयेद् शांस्त्रींश्च मातामहा
न्। दौहित्रः पुत्रवत्स्वर्ग्ये उक्तौ शास्त्रेऽगुनी सुतौ ॥ ५२
गृहस्थस्तु चतुर्भेदो वार्ताशालीनवृत्तिकौ। यायावरस्
थैवान्योऽघोरसंन्यासिकस्तथा ॥ ५३॥ कृषिगोरक्षवाणि
ज्यैः कुर्वन्स्वर्यां क्रियां द्विजः। विहितैरात्मविद्येश्च वार्त्त
वृत्तिः स उच्यते ॥ ५४॥ दशान्यद्येति यजते याजयेन्न
पाठयेत्। कुर्यात्कर्माणि नित्यानि शालीनो ध्यानकृद् द्वि
जः ॥ ५५॥ उक्तस्तत्कारयेदन्यान्क्रियाः कुर्यात्प्रतिगृह्णी
पाठयेच्चैव आत्मानं यायावरः स उच्यते ॥ ५६॥ शिलोञ्छ
ष्यां समुत्तिष्ठेद्दहनाग्निश्च वर्तते। आत्मविद्याक्रियाः कु
र्यात् घोरसंन्यासिकः स्मृतः ॥ ५७॥ इत्यादि पराशरसं
हितायां सविभागं गृहस्थधर्माः ॥ अथात्र ॥ अपुत्रेणै
व कर्तव्यः पुत्रप्रतिनिधिः सदा। पिण्डोदकक्रियाहे
तोर्यस्मात्तस्मात्प्रयत्नतः ॥ १॥ पिता पुत्रस्य जातस्य
पश्येच्चेज्जीवतो मुखम्। ऋणमस्मिन्संनयति अमृत
त्वं च गच्छति ॥ २॥ जातमात्रेण पुत्रेण पितॄणामनृणी
पिता। तदह्नि शुद्धिमाप्नोति नरकात्त्रायते हि सः ॥ ३॥ ए
ष्टव्या बहवः पुत्राः यद्येकोऽपि गयां व्रजेत्। यजेत वाश्व
मेधं च नीलं वा वृषमुत्सृजेत् ॥ ४॥ कांक्षन्ति पितरः स
र्वे नरकान्तरभीरवः। गयां यास्यति यः पुत्रः स नस्त्राता
भविष्यति ॥ ५॥ फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदा
धरम्। गयाशीर्षं पदाक्रम्य मुच्यते ब्रह्महत्यया ॥ ६॥
महानदीमुपस्पृश्य तर्पयेत्पितृदेवताः। अक्षय्यान् लभ
ते लोकान्कुलं चैव समुद्धरेत् ॥ ७॥ पुत्रादि स्वजने दद्या

द्विमापचनकैतवो। सकामः स्वर्गमाप्नोति। [illegible]मो
मोक्षमाप्नुयात्॥८॥ एवं॥ जीवद्भर्तरि या नारी उप[illegible]
व्रतचारिणी॥ आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत्॥
तीर्थस्नानार्थिनी नारी पतिपादोदकं पिबेत्॥९॥ शंकरस्या
पि विष्णोर्वा प्रयाति परमं पदम्॥ इत्यत्रिप्रोक्तधर्माः॥
अथात्र। एष्टव्या बहवः पुत्राः यद्येकोऽपि गयां व्रजेत्। य
जेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्॥१॥ गयाशि
रे तु यत्किंचित् नाम्ना पिण्डं तु निर्वपेत्। नरकस्थो दिवं
याति स्वर्गस्थो मोक्षमाप्नुयात्॥२॥ आत्मनो वा परस्या
पि गयाकूपे यतस्ततः। यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म
शाश्वतम्॥३॥ श्राद्धं दत्वा च भुक्त्वा च अध्वानं योऽधि
गच्छति। भवन्ति पितरस्तस्य तन्मासं पांसुभोजनाः॥४॥
पुनर्भोजनमध्वानं भाराध्ययनमैथुनम्। दानं प्रतिग्र
हं होमं श्राद्धं कृत्वाष्ट वर्जयेत्॥५॥ अध्वगामी भवेद्
श्वः पुनर्भोक्ता च वायसः। कर्मकृज्जायते दासः स्त्री
गमने च सूकरः॥६॥ इति लिखितोक्त धर्मा ज्ञेयाः॥ ॥
अत्र यमोऽप्याह॥ स्वभार्यां तु यदा क्रोधाद्गम्येति नरो
वदेत्। प्राजापत्यं चरेद्विप्रः क्षत्रियो दिवसान्नव। षड्
रात्रं चरेद्वैश्यः त्रिरात्रं शूद्र आचरेदित्यादिना॥
॥अथात्र॥ सा भार्या या गृहे दक्षा सा भार्या या पतिव्र
ता। सा भार्या या पतिप्राणा सा भार्या या प्रजावती॥१॥
लालनीया सदा भार्या ताडनीया तथैव च। ताडिता
लालिता चैव स्त्री श्रीर्भवति नान्यथा॥२॥ एवं॥ पञ्च
सूना गृहस्थस्य चुल्ली पेषण्युपस्करः। कण्डनी चोद
कुम्भश्च तस्य पापस्य शान्तये॥३॥ पञ्च यज्ञविधानं
तु गृही नित्यं न हापयेत्। पञ्चयज्ञविधानेन तत्पा
पं तस्य विनश्यति॥४॥ देवयज्ञो भूतयज्ञः पितृयज्ञ
स्तथैव च। ब्रह्मयज्ञो नृयज्ञश्च पञ्च यज्ञाः प्रकीर्तिताः॥

५॥होमोदैवोबलिर्भौतः पित्र्यक्रियास्मृतः॥स्वाध्या-
योब्रह्मयज्ञश्च नृयज्ञोऽतिथिपूजनम्॥६॥वानप्र
स्थो ब्रह्मचारी यतिश्चैव तथाद्विजः।गृहस्थस्य प्रसादे
न जीवन्त्येते यथाविधि॥७॥गृहस्थएव यजते गृह
स्थस्तप्यतेतपः।ददातिच गृहस्थश्च तस्माच्छ्रेयान्गृह
श्रमी॥८॥यथाभर्ताप्रभुःस्त्रीणां वर्णानांब्राह्मणो यथा।
अतिथिस्तद्वदेवास्यगृहस्थस्य प्रभुःस्मृतः॥९॥नव्रतै
र्नोपवासैश्च धर्मेणविविधेनच।नारीस्वर्गमवाप्नोति
प्राप्नोतिपतिपूजनात्॥१०॥नव्रतैर्नोपवासैश्च नचयज्ञैः
पृथग्विधैः।राजास्वर्गमवाप्नोति प्राप्नोतिपरिपालनात्
॥११॥नस्नानेननमौनेन नैवाग्निपरिचर्यया।ब्रह्मचा
रीदिवंयाति सयातिगुरुपूजनात्॥१२॥नाग्निशुश्रूषया
ह्यन्त्या स्नानेनविविधेनच।वानप्रस्थोदिवंयाति या
तिभोजनवर्जनात्॥१३॥नदण्डेनचमौनेन शून्यागा
राश्रयेणच।यतिःसिद्धिमवाप्नोति योगेनाप्नोत्यनुत्त
मम्॥१४॥नयज्ञैर्दक्षिणावद्भिः वह्निशुश्रूषयानवा॥
गृहीस्वर्गमवाप्नोति यथाचातिथिपूजनात्॥१५॥त-
स्मात्सर्वप्रयत्नेन गृहस्थोतिथिमागतम्।आहार
शयनाद्येन विधिवत्प्रतिपूजयेत्॥१६॥एवंदेवपितृ
यज्ञत्याह॥ब्राह्मणान्नपरीक्षेतदैवेकर्मणिधर्मवित्॥
पित्र्यकर्मणितत्प्राप्तेयुक्तमाहुःपरीक्षणम्॥१७॥ब्रा
ह्मणायेविकर्मस्थाः वैडालव्रतिकास्तथा।ऊनाङ्गाअतिरि
क्ताङ्गाब्राह्मणाःपंक्तिदूषकाः॥१८॥अनध्यायेष्वधीयानाः
शौचाचारविवर्जिताः।शूद्रान्नरससंपुष्टाः ब्राह्मणाःपं
क्तिदूषकाः॥१९॥ऋग्यजुःपारगोयश्च साम्नांयश्चापिपा
रगः।अथर्वांगीरसोऽध्येता ब्राह्मणःपंक्तिपावनः॥२०
नित्ययोगरतोविद्वान् समलोष्टाश्मकाञ्चनः।ध्यान
शीलोहियोविद्वान ब्राह्मणःपंक्तिपावनः॥२१॥द्वौदै

वैप्राङ्मुखौ त्रीन्पित्र्ये चोदङ्मुखांस्तथा। भोजयेद्धि विप्रा
न्विप्रान् एकैकमुभयत्र वा॥२४॥ इति गौतमोक्तधर्माः॥ अ
थात्रिः। देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः। पशुर्म्ले
च्छोपि चाण्डालो विप्रा दशविधाः स्मृताः॥१॥ संध्यां स्नानं
जपं होमं देवतानित्यपूजनम्। अतिथिं वैश्वदेवं च देव
ब्राह्मण उच्यते॥२॥ शाके पत्रे फले मूले वनवासे सदा र
तः। निरतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते॥३॥ वेदा
न्तं पठते नित्यं सर्वसंगं परित्यजेत्। सांख्ययोगविचार
स्थः स विप्रो द्विज उच्यते॥४॥ अस्त्राहताश्च धन्वानः
संग्रामे सर्वसंमुखे। आरम्भे निर्जिता येन स विप्रः क्षत्र
उच्यते॥५॥ कृषिकर्मरतो यश्च गवां च प्रतिपालकः॥
वाणिज्यव्यवसायश्च स विप्रो वैश्य उच्यते॥६॥ लाक्षा
लवणसंमिश्रं कुसुम्भं क्षीरसर्पिषः॥ विक्रेता मधुमांसा
नां स विप्रः शूद्र उच्यते॥७॥ चोरश्च तस्करश्चैव सूच
को दंशकस्तथा। मत्स्यमांसे सदा लुब्धो विप्रो निषाद
उच्यते॥८॥ ब्रह्मतत्त्वं न जानाति ब्रह्मसूत्रेण गर्वितः।
तेनैव स च पापेन विप्रः पशुरुदाहृतः॥९॥ वापीकूप
तडागानामारामस्य सरस्सु च। निःशंकं रोधकश्चैव
स विप्रो म्लेच्छ उच्यते॥१०॥ क्रियाहीनश्च मूर्खश्च स
र्वधर्मविवर्जितः। निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उ
च्यते॥११॥ वेदैर्विहीनाश्च पठन्ति शास्त्रं शास्त्रेण वि
हीनाश्च पुराणपाठाः। पुराणहीनाः कृषिणो भवन्ति
भ्रष्टास्ततो भागवता भवन्ति॥१२॥ ज्योतिर्विदो ह्यथ
र्वाणः कीराः पौराणपाठकाः। श्राद्धे यज्ञे महादाने व
रणीयाः कदाचन॥१३॥ श्राद्धं च पितरं घोरं दानं चैव
तु निष्फलम्। यज्ञे च फलहानिः स्यात् तस्मात्तान्परि
वर्जयेत्॥१४॥ आविकश्चित्रकारश्च वैद्यो नक्षत्रपा

ठकः। चतुर्विप्रान पूज्यन्ते वृहस्पतिसमा यदि॥१५॥
श्रुतिः स्मृतिश्च विप्राणां नयने द्वे प्रकीर्तिते। काणः स्या
देकहीनो ऽपि द्वाभ्यामंधः प्रकीर्तितः॥१६॥ न श्रुतिर्न स्मृ
तिर्यस्य न शीलं न कुलं यतः। तस्य श्राद्धं न दानं स्यात्त्व
न्धकस्यात्रिरब्रवीत्॥१७॥ तस्माद्वेदेन शास्त्रेण ब्राह्म
ण्यं ब्राह्मणस्य तु। न चैकेनैव वेदेन भगवानत्रिरब्रवी
त्॥१८॥ नास्ति वेदात्परं शास्त्रं नास्ति मातुः परो गुरुः। न
स्ति दानात्परं मित्रमिह लोके परत्र च॥१९॥ अपात्रे स
पि यद्दत्तं दहत्यासप्तमं कुलम्। हव्यं देवा न गृह्णन्ति क
व्यं च पितरस्तथा॥२०॥ एवं भिक्षाविचारे॥ सौवर्णाय
सताम्रेषु कांस्यरौप्यमयेषु च। भिक्षादातुर्न धर्मोस्ति
भिक्षुर्भुङ्क्ते तु किल्बिषम्॥२१॥ न च कांस्येषु भुञ्जी
यादापद्यपि कदाचन। मलाशाः सर्व एवैते यतयः
कांस्यभोजनः॥२२॥ कांस्यकस्य च यत्पात्रं गृहस्थ
स्य तथैव च। कांस्यभोजी यतिश्चैव प्राप्नुयात्किल्बिषं त
योः॥२३॥ आयसेन तु पात्रेण यदन्नमुपदीयते। भ्वान
विष्ठासमं भुंक्ते दाता च नरकं व्रजेत्॥२४॥ पित्तले न तु
पात्रेण दीयमानं विचक्षणः। न दद्याद्वा महस्ते न आ
यसेन कदाचन॥२५॥ स्वानि कर्माणि कुर्वाणा दूरे स
न्तो ऽपि मानवाः। प्रिया भवन्ति लोकस्य स्वे स्वे कर्मण्यु
पस्थिताः॥२६॥ कर्म विप्रस्य यजनं दानमध्ययनं
तपः। प्रतिग्रहो ऽध्यापनं च याजनं चेति वृत्तयः॥२७॥
क्षत्रियस्यापि यजनं दानमध्ययनं तपः। शस्त्रोपजी
वनं भूतरक्षणं चेति वृत्तयः॥२८॥ दानमध्ययनं वा
र्तायजनं चेति वै विशः। शूद्रस्य वार्ता शुश्रूषा द्विजानां
कारुकर्म च॥२९॥ तदेतत्कर्माभिहितं संस्थिता यत्र
वर्णिनः॥ बहुमानमिह प्राप्य प्रयान्ति परमां गतिम्॥

॥२०॥ येप्यपेताःस्वधर्मात्ते परधर्मेष्ववस्थिताः॥तेषांशा
न्तिकरोराजा स्वर्गलोकेमहीयते॥२१॥आत्मीये संस्थितो
धर्मे शूद्रोपिस्वर्गमश्नुते॥ परधर्मोभवेत्त्याज्यः सुरूपप
रदारवत्॥२२॥ एवंकृषिधर्मानाह॥ यस्यैकापिगृहेना
स्ति धेनुर्वत्सानुसारिणी॥ मंगलानिकुतस्तस्य कुतस्तस्य
तमःक्षयः॥अष्टागवंधर्महलं षड्गवंव्यावहारिकम्॥२५॥
चतुर्गवंनृशंसानां द्विगवंगववधकृत्।द्विगवंवाहयेत्सा
र्द्धं मध्याह्नेतुचतुर्गवम्॥२६॥षड्गवस्तुत्रिपादोक्तं पूर्णाह
स्त्वष्टभिःस्मृतः॥एवं॥ देवयात्राविवाहेषु यज्ञप्रकरणे
षुच॥उत्सवेषुचसर्वेषु स्पृष्टास्पृष्टंनविद्यते॥२७॥आरना
लंतथाक्षीरं कंदुकंदधिसक्तवः॥स्नेहपक्वंचतक्रंच
शूद्रस्यापिनदुष्यति॥२८॥इत्यत्रिधर्माः॥ ॥
अथात्र॥मातापितागुरुर्भार्या प्रजादीनःसमाश्रितः
॥अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्गउदाहृतः॥१॥
सार्वभौतिकमन्नाद्यं कर्तव्यंतुविशेषतः॥ज्ञानविद्भः
प्रदातव्य मन्यथानरकंव्रजेन्नरः।भरणंपोष्यवर्गस्य
प्रशस्तंस्वर्गसाधनम्॥नरकःपीडनेतस्य तस्माद्यत्ने
नतंभरेत्॥३॥सजीवतियएवैको बहुभिश्चोपजीव्यते
॥जीवन्तोमृतकास्त्वन्ये पुरुषाःस्वोदरंभराः॥४॥बह्वर्थे
जीव्यतेकैश्चित् कुटुम्बार्थेतथापरैः॥आत्मार्थेऽन्योन
शक्नोति स्वोदरेणापिदुःखितः॥५॥देवैश्चैवमनुष्यैश्च
तिर्यग्भिश्चोपजीव्यते।गृहस्थःप्रत्यहंयस्मात्तस्माच्छ्रे
ष्ठाश्रमोगृही॥६॥गृहस्थोपिक्रियायुक्तः गृहेणनगृ
हीभवेत्।नचैवपुत्रदारेण स्वकर्मपरिवर्जितः॥७॥अ
हुत्वाचतथाऽजप्त्वाअदत्त्वाचयश्चभुंजते॥देवादीना
मृणीभूत्वादरिद्रश्चभवेन्नरः॥८॥विभागशीलतायस्य
स्यक्षमायुक्तोदयालुकः देवातिथिभक्तश्चगृहस्थः

सतु धार्मिकः॥९॥दयालज्जाक्षमाश्रद्धामज्ञात्यागःक्ष
न्नृत्ता।गुणायस्यभवन्त्येते गृहस्थोमुख्यएवच॥१०
अनृतंपरदाराश्चतथाभक्ष्यस्यभक्षणम्॥अगम्याग
मनापेयपानंस्तेयंचहिंसनम्॥अश्रौतकर्माचरणंमैत्र
धर्मबहिष्कृतम्॥११॥नवैतानिविकर्माणितानिसर्वा-
णिवर्जयेत्।पैशुन्यमनृतंमायाकामःक्रोधस्तथाप्रियम्
॥१२॥द्वेषोदम्भःपरद्रोहःमत्सरश्चानितथ्यानव॥एवमन्य
दपि॥पत्नीमूलंगृहंपुंसांयदिछन्दानुवर्तिनी॥गृहाश्रम
त्परंनास्ति यदिभार्यावशानुगा॥१३॥तयाधर्मार्थकाम
नांत्रिवर्गफलमश्नुते।अनुकूलकलत्रोयःस्वर्गस्तस्यन
संशयः॥१४॥प्रतिकूलकलत्रस्यनरकोनात्रसंशयः
॥स्वर्गेपिदुर्लभंह्येतदनुरागःपरस्परम्॥१५॥रक्तमेकं
विरक्तंच ततःकष्टतरंनुकिम्॥गृहवासःसुखार्थो-
हि पत्नीमूलंचतत्सुखम्॥१६॥सापत्नीयाविनीता
स्यात् चित्तज्ञावशवर्तिनी।दुःखाह्यन्यासदाछिन्ना
चित्तभेदःपरस्परम्॥१७॥प्रतिकूलकलत्रस्यद्वि
दारस्यविशेषतः।जलौकाइवताःसर्वाभूषणाच्छा
दनाशनैः॥१८॥सुभृतापिकृतानित्यंपुरुषंह्यपक
र्षति।जलौकारक्तमादत्तेकेवलंसातपस्विनी॥१९॥
गृहस्थमानसानित्यंस्थानमानविचक्षणा॥भर्तुःप्री
तिकरीयातुभार्यासाचेतराजरा॥शिष्याभार्याशिशुर्भ्रा
तामित्रंदासःसमाश्रितः॥२०॥यस्यैतानिविनीतानित
स्यलोकेपिगौरवम्॥अदुष्टापतितांभार्यांयौवनेयःप
रित्यजेत्॥२१॥सजीवनान्तेस्त्रीत्वंचवन्ध्यत्वंचसमाप्नु
यात्।दरिद्रंव्याधितंचैवभर्तारंयावमन्यते॥२२॥शु
नीगृध्रीचमकरीजायतेसापुनःपुनः।मृतेभर्तरिया
नारीसमारोहेद्धुताशनम्॥२३॥साभवेत्तुशुभाचारा

स्वर्गलोके महीयते॥ व्यालग्राही यथा व्यालं बलादुद्धर
ते बिलात्॥ २८॥ तथा सा पतिमुद्धृत्य तेनैव सह मोदते॥ २९॥
॥ इति दक्षस्मारता धर्माः॥ ॥ अथात्र॥ गृहाश्रमात्परो
धर्मो नास्ति नास्ति पुनः पुनः॥ सर्वतीर्थफलं तस्य यथोक्तं य
स्तु पालयेत्॥ १॥ गुरुभक्तो भृत्यपोषी दयावाननसूयकः।
नित्यजापी च होमी च सत्यवादी जितेन्द्रियः॥ २॥ स्वदारे य-
स्य संतोषः परदारनिवर्त्तनम्। अपवादोऽपि नो यस्य तस्य
तीर्थफलं गृहे॥ ३॥ परदारान्परद्रव्यं हरते यो दिने दिने।
सर्वतीर्थाभिषेकेण पापं तस्य न नश्यति॥ ४॥ मातापित्रोः
परं तीर्थं गंगा गावो विशेषतः। ब्राह्मणात्परमं तीर्थं न भू
तं न भविष्यति॥ ५॥ इन्द्रियाणि वशीकृत्य गृह एव वसे
न्नरः॥ तत्र तस्य कुरुक्षेत्रं नैमिषं पुष्कराणि च॥ ६॥ गङ्गा
द्वारं च केदारं संनिहत्यं तथैव च॥ एतानि सर्वतीर्थानि
कृत्वा पापैः प्रमुच्यते॥ ७॥ यद्ददाति विशिष्टेभ्यो यच्चा
श्नाति दिने दिने॥ तच्च वित्तमहं मन्ये शेषं कस्याभिरक्षति
॥ ८॥ यद्ददाति यदश्नाति तदेव धनिनो धनम्॥ अन्ये मृ
तस्य क्रीडन्ति दारैरपि धनैरपि॥ ९॥ किं धनेन करिष्य
न्ति देहिनोऽपि गतायुषः। यद्वर्धयितुमिच्छन्तस्तच्छरी
रमशाश्वतम्॥ १०॥ अशाश्वतानि गात्राणि विभवो
नैव शाश्वतः॥ नित्यं संनिहितो मृत्युः कर्त्तव्यो धर्म
संग्रहः॥ ११॥ यदि नाम न धर्माय न कामाय न कीर्त्तये।
यत्परित्यज्य गन्तव्यं तद्धनं किं न दीयते॥ १२॥ जीवन्ति
जीवते यस्य विप्रा मित्राणि बान्धवाः॥ जीवितं सफलं
तस्य आत्मार्थे को न जीवति॥ १३॥ ग्रासादर्द्धमपि ग्रा
समर्थिभ्यः किं न दीयते। इच्छानुरूपो विभवः कदा क
स्य भविष्यति॥ १४॥ अदाता पुरुषस्त्यागी धनं संत्यज्य
गच्छति॥ दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति॥ १५
अनाहूतेषु यद्दत्तं यच्च दत्तमयाचितम्। भविष्यति युगा-

स्यान्तः तस्मात्तोन भविष्यति॥१६॥ सायमप्यतिथिः
पूज्यो होमकालागतो निशाम्। श्रद्धया शक्तितो नित्यं श्रुतं
हन्याद पूजितः॥१७॥ अदृष्टे चाश्रुते दानं भोक्ता चैव न दृ
श्यते। पुनरागमनं नास्ति तत्र दानमनन्तकम्॥१८॥
अतिथिदानफलमधिकं यतिप्रकरणे वक्ष्यते॥ माता
पितृषु यद्द्यात् भ्रातृषु श्वशुरेषु च। जायापत्येषु यद्द्
द्यात् सोऽनन्तः स्वर्गसंक्रमः॥१९॥ पितुः शतगुणं दानं स
हस्रं मातुरुच्यते। भगिन्यां शतसाहस्रं सोदरे दत्तमक्षय
म्॥२०॥ अहन्यहनि दातव्यं ब्राह्मणेषु मुनीश्वराः। आग
मिष्यति यत्पात्रं तत्पात्रं तारयिष्यति॥२१॥ किंचिद्वेदम
यं पात्रं किंचित्पात्रं तपोमयम्। पात्राणामुत्तमं पात्रं शूद्रा
न्नं यस्य नोदरे॥२२॥ यस्य चैव गृहे मूर्खो दूरे चापि गुणा
न्वितः। गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः॥२३
ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते। ज्वलन्तम
ग्निमुत्सृज्य न हि भस्मनि हूयते॥२४॥ सन्निकृष्टमधीया
नं ब्राह्मणं यो व्यतिक्रमेत्। भोजने चैव दाने च हन्त्यात्रिपु
रुषं कुलम्॥२५॥ यथा काष्ठमयो हस्ती यथा चर्ममयो मृ
गः। यश्च विप्रोऽनधीयानः त्रयस्ते नामधारकाः॥२६॥
सुक्षेत्रे वापयेद्बीजं सुपात्रे दापयेद्धनम्। सुक्षेत्रे च सुपा
त्रे च क्षिप्तं नैव हि दुष्यति॥२७॥ विद्याविनयसम्पन्ने
ब्राह्मणे गृहमागते। क्रीडन्त्योषधयः सर्वा यास्यामः
परमां गतिम्॥२८॥ नष्टशौचे व्रतभ्रष्टे विप्रे वेदविव
र्जिते। दीयमानं रुदत्यन्नं भयाद्वै दुष्कृतं कृतम्॥२९॥
वेदपूर्णमुखं विप्रं सुभुक्तमपि भोजयेत्। न च मूर्खं निरा
हारं षड्रात्रमुपवासितम्॥३०॥ यस्य देहे सदाश्नन्ति
हव्यानि त्रिदिवौकसः। कव्यानि चैव पितरः किं भूतम
धिकं ततः॥३१॥ यद्भुंक्ते वेदविद्विप्रः स्वकर्मनिरतः शु
चिः। दातुः फलमसंख्यातं प्रतिजन्म तदक्षयम्॥३२॥ श्रो

नेषु जायते शूरः सहस्रेषु च पण्डितः। वक्ता शतसहस्रे
षु दाता भवति वा न वा॥ ३४॥ न रणे विजयाच्छूरोऽध्य
यनान्न च पण्डितः। न वक्ता वाक्पटुत्वेन न दाता चार्थदान
तः॥ ३६॥ इन्द्रियाणां जये शूरो धर्मं चरति पण्डितः। हि
तप्रायोक्तिभिर्वक्ता दाता सन्मानदानतः॥ ३७॥ इति
व्यासस्मृतिधर्माः॥ ॥अथ सर्वसाधारणतत्तत्स्म
त्युक्तविशिष्टाखिलधर्माः॥ तथा हि अशुद्धिप्रकरणे मनु
राह॥ विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम्। वै
श्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः॥ इति। अस्यार्थः
। अशौचान्ते कृतश्राद्धादिकृत्यो ब्राह्मणः अपः स्पृष्ट्वेति
जलस्पर्शमात्रं दक्षिणहस्तेन कृत्वा शुद्धो भवति। तत्र
संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यतीति कर्मान्तरव
त्तान्त्यात्। वाहनादिस्पर्शसाहचर्यात्। स्पृष्ट्वेत्यस्य च स
कृदुच्चरितस्यार्थभेदस्यान्याय्यत्वात्॥ क्षत्रियो हस्त्य
श्ववाहनं खड्गादि शस्त्रं च स्पृष्ट्वा। वैश्यो बलीवर्दादि
प्रतोदं लोहमयीं नाग्रयष्टिं वा स्पृष्ट्वा। शूद्रो यष्टिं वंशार
रिडकां स्पृष्ट्वा शुद्धो भवतीति मन्वर्थमुक्तावल्यां स्पष्ट
म्॥ ॥मिताक्षराकारास्तु। कृतक्रिय इति प्रत्येकम
भिसंबध्यते विप्रादिभूताशौचकालः कृतक्रियः कृत
स्नानोऽपि हस्तेनापः स्पृष्ट्वा शुध्यति। स्पृष्ट्वेति स्पर्शन
क्रियैवोच्यते न स्नानमाचमनं वा। वाहनादिषु तस्यै
वानुषङ्गात्॥ अथवा कृतक्रियो यावदाशौचं कृतोदका
दिक्रियस्तदनन्तरं विप्रादिरुदकादि स्पृष्ट्वा शुध्यतीत्या
शौचकालानन्तरभाविस्नानप्रतिनिधित्वेनाभिधान
मिदमित्याहुः॥ ॥अन्ये तु कृतक्रिय इति विशेष
णात्। कृतसमस्तपाकादिकर्म येन स कृतक्रियः तत्तत्क
र्मविशिष्टो ब्राह्मणादिरित्यर्थो लभ्यते। तथा च पूर्वेत्ता
नादिना सम्यक् शुद्धावपि पुनरुक्तविशेषणीभूतान्ता

दोनहि शिष्टशरीरादौवाःशुद्धिशंकायांविशेषणोप्रो
क्षणप्रक्षालनतुल्यं· शरीरेस्नानतुल्यंचैतत्कर्माभि
धानंमनुनाकृतम्।अन्यथा।स्नानाऽनाश्याशौचस्य
जलसम्पर्कादिस्पर्शमात्रेणनाशाभिधानंविरुध्येत।पूर्वे
स्नानेपिजलस्पर्शसम्भवादित्येवंव्याख्यानंचक्रुः॥प्र
सिद्धंचेदंश्रीगुरुनानकसंप्रदायीनांमतेगुरुदेवेन
कृतान्नादौकृपाणसंबंधाभिधानमिति॥ ॥एवंजन्मा
नंतरंशुभतिथौमुहूर्तेब्राह्मणादीनांयथाक्रमंमंगल
बलधननिन्दावाचकानिनामानिकर्तव्यानि॥उदा
हरणानितुरामशर्मा।रामदेवः।भूदेवइत्यादीनिब्राह्म
णस्य रामरक्षा।रामवर्मा।भूभुजइत्यादीनिक्षत्रियस्य
।रामधनः।रामरत्नः।भूतिदत्तइत्यादीनिवैश्यस्य राम
दीनः।रामदासः।द्विजप्रेष्यइत्यादीनिशूद्रस्येत्यादीनि
ज्ञातव्यानि॥अत्राहमनुः।नामधेयंदशम्यांतुद्वादश्यां
वाऽस्यकारयेत्।पुण्येतिथौमुहूर्तेवानक्षत्रेवागुणान्वि
ते॥१॥मांगल्यंब्राह्मणस्यस्यात्क्षत्रियस्यबलान्वितम्।वै
श्यस्यधनसंयुक्तंशूद्रस्यतुजुगुप्सितम्॥२॥शर्मवद्ब्रा
ह्मणस्यस्याद्राज्ञोरक्षासमन्वितम्।वैश्यस्यपुष्टिसंयु
क्तंशूद्रस्यप्रेष्यसंयुतमिति॥तथाहयमः।शर्मादेववि
प्रस्यवर्मत्राताचभूभुजः।भूतिर्दत्तश्चवैश्यस्यदासः
शूद्रस्यकारयेदिति॥ ॥एवंनविगर्ह्यकथांकुर्यान्न
बहिर्माल्यंनधारयेत्।गवांचयानेपृष्ठेनसर्वथैववि
गर्हितमितिमनुः॥केशकलापाद्बहिर्वाह्यादौमाल्यं
नधारयेत्।पृष्ठेनेत्यभिधानात्कचाकृष्टशकटाद्यारोह
णनदोषइत्यर्थः॥ ॥एवं·मद्यनिंद्यकर्माणिनरा
णामजानताम्।भस्मीभूतेषुविप्रेषुमोहादेवदृढीकृता
भिः॥१॥विद्यातपःसमृद्धेषुहुतंविप्रमुखाग्निषु।नि
स्तारयतिदुर्गाच्चमहतश्चैवकिल्बिषात्॥२॥संग्राम

यत्वतिथये प्रदद्यादासनोदके।अन्नंचैवयथाशक्तिस
त्कृत्यविधिपूर्वकम्॥३॥शिलानप्युञ्छतोनित्यंपञ्चा
ग्नीनपिजुह्वतः।सर्वंसुकृतमादत्तेब्राह्मणोऽनर्चितोव
सन्॥४॥तृणानिभूमिरुदकंवाक्चतुर्थीचसूनृता।एता
न्यपिसतांगेहेनोच्छिद्यन्तेकदाचन॥५॥एकरात्रंतुनि
वसन्नतिथिर्ब्राह्मणःस्मृतः।अनित्यंहिस्थितोयस्मा
त्तस्मादतिथिरुच्यते॥६॥अप्रणोद्योऽतिथिःसायंसूर्यो
ढोगृहमेधिना।कालेप्राप्तस्त्वकालेवानास्यानश्नन्गृहे
वसन्॥७॥नवैस्वयंतदश्नीयादतिथिंयन्नभोजयेत्।ध
न्यंयशस्यमायुष्यंस्वर्ग्यंवातिथिपूजनम्॥८॥नश्राद्धे
भोजयेन्मित्रंधनैःकार्योस्यसंग्रहः।यस्यमित्रप्रधा
नानिश्राद्धानिचहवींषिच।तस्यप्रेत्यफलंनास्तिश्रा
द्धेषुचहविःषुच॥९॥यःसंगतानिकुरुतेमोहाच्छ्रा
द्धेनमानवः।सस्वर्गाच्च्यवतेलोकाच्छ्राद्धमित्रोद्विजा
धमः॥१०॥अकारणपरित्यक्तामातापित्रोर्गुरोस्तथा॥
अगारदाहीगरदःकुण्डाशीसोमविक्रयी॥११॥इत्यादि
नामनूक्तदुष्टविप्रान्नभोजयेत्।यत्नेनभोजयेच्छ्राद्धे
बह्वृचंवेदपारगम्।शाखान्तमथवाध्वर्युंछन्दोगंतुसमा
प्तिकम्॥१२॥एषामन्यतमोयस्यभुञ्जीतश्राद्धमर्चि
तः।पितॄणांतस्यतृप्तिःस्याच्छाश्वतीसाप्तपौरुषी॥१३
एकैकमपिविद्वांसंदैवेपित्र्येचभोजयेत्।पुष्कलंफल
माप्नोतिनामन्त्रज्ञान्बहूनपि॥१४॥सहस्रंहिसहस्राणा
मनृचांयत्रभुञ्जते।एकस्तान्मन्त्रवित्प्रीतःसर्वानर्हति
धर्मतः॥१५॥ज्ञानोत्कृष्टायदेयानिकव्यानिचहवींषिच
।नहिहस्तावसृग्दिग्धौरुधिरेणैवशुध्यतः॥१६॥याव
तोग्रसतेग्रासान्हव्यकव्येष्वमन्त्रवित्।तावतोग्रसतेप्रे
त्यदीप्तशूलर्ष्ट्ययोगुडान्॥१७॥ज्ञाननिष्ठाद्विजाःकेचि
त्तपोनिष्ठास्तथापरे।तपःस्वाध्यायनिष्ठाश्चकर्मनि

स्तात्तथापरे ॥१८॥ हुतानि ष्टुकव्यानि प्रतिष्ठाप्यानि यत्नतः। हव्यानि तु यथान्यायं सर्वदैवेन चतुर्ष्वपि ॥१९॥ निमन्त्रितान्हि पितर उपतिष्ठन्ति तान्द्विजान्। वायुवच्चानुगच्छन्ति तथासीनानुपासते ॥२०॥ केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः। कथंचिदप्यतिक्रामन् पापः सूकरतां व्रजेत् ॥२१॥ आमन्त्रितस्तु यः श्राद्धे वृषल्या सह मोदते। दातुर्यद्दुष्कृतं किंचित्तत्सर्वं प्रतिपद्यते ॥२२॥ अत्र हेतुः यतः ॥ अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः। न्यस्तशस्त्रा महाभागाः पितरः पूर्वदेवताः ॥२३॥ यावदुष्णं भवत्यन्नं यावदश्नन्ति वाग्यताः। पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः ॥२४॥ विघसाशी भवेन्नित्यं नित्यं वाऽमृतभोजनः। विघसो भुक्तशेषं तु यज्ञशेषं तथाऽमृतम् ॥२५॥ ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा। पर्ववर्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया ॥२६॥ निन्द्यास्वष्टासु चान्यासु स्त्रियो रात्रिषु वर्जयन्। ब्रह्मचार्येव भवति यत्र तत्राश्रमे वसन् ॥२७॥ इति मनुधर्मः ॥ ऋत्विति ऋतुर्नाम शोणितदर्शनोपलक्षितो गर्भधारणयोग्यः स्त्रीणामवस्थाविशेषः षोडशरात्रिपरिमितकालः ॥ तत्कालाभिगामी स्यादिति विधितः स्त्रीगमनं प्राप्तम्। अत एव विहितत्वादृतावगमने दोषमाह पराशरः। ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति। घोरायां भ्रूणहत्यायां पतते नात्र संशयः ॥१॥ अनुत्पन्नपुत्रस्य चायं नियमः ॥ ब्राह्मणो ह वै जायमानस्त्रिभिर्ऋणैर्ऋणवान् जायते। यज्ञेन देवेभ्यः प्रजया पितृभ्यः स्वाध्यायेन ऋषिभ्य इत्येतत्सन्तत्युत्पत्तिमूलत्वे स्त्रीगमनस्य संभवति ॥ मूलान्तरकल्पनस्यायुक्तत्वात् ॥ पुत्रोत्पादनशास्त्रस्यैकपुत्रोत्पादनेनैव चरितार्थत्वात् ॥ कामजानितरान्विदुरिति दर्शनाज्जातपुत्रस्यैव नियमो ज्ञेयः ॥ दृष्टाऽस्यां

पुत्राभावे हीति मन्त्रस्तु बहुपुत्रप्रशंसापरः। जातपुत्रस्या
प्यृतुकालगमननियमो न दृश्यस्त्वेवावतिष्ठते। स्वदारनि
रतः सदेति नित्यं स्वदारसंतुष्टः स्यान्नान्यभार्यामुपगच्छेदि
ति विधानात्परिसंख्यैव वाक्यात्। स्वदारगमनस्य प्राप्त
त्वात्। ऋतावगमने दोषाश्रवणाच्च न नियमविधिः। पर्वव
र्जं व्रजेच्चैनामिति पर्वाण्यमावास्यादीनि वर्जयित्वा। भार्या
प्रीतिव्रतं यस्य स तद्व्रतः ऋतावप्युपेयात्। अत एव रतिकाम्य
या न तु पुत्रोत्पादनशास्त्रबुध्या। तस्माद्विधित्रयमिदम्॥
ऋतावुपेयादेव। अन्यभार्यां नोपगच्छेत्। अनृतावपि भा
र्याप्रीतये गच्छेदिति॥ अत्र च गौतमः ऋतावुपेयादनृतौ
च पर्ववर्जम्। याज्ञवल्क्योप्याह· यथाकामी भवेद्वापि स्त्री
णां वरमनुस्मरन्। पर्ववर्जमिति ऋतावनृतौ चोभयत्र संब
ध्यते॥ निन्द्यास्विति॥ निन्द्यासु पूर्वोक्तासु षट्सु रात्रिषु· मनूक्त
ऋतुदर्शनदिनमारभ्य चतुर्दिनरात्रिसहितैकादशीत्र
योदशीषु षट्स्विति यावत्॥ अन्यासु च निन्द्यासु यासु का
सुचिद्दृष्टासु ग्रहणश्राद्धादिरात्रिष्विति यावत्॥ स्त्रियो
वर्जयन्॥ अवशिष्टपर्ववर्जितेषु व्रजन्नखण्डितब्रह्मचा
र्यैव भवति॥ यत्रतत्राश्रमे वसन्निति। वानप्रस्थापेक्ष
या। तस्य हि भार्यया सह गमनपक्षे ऋतुगमनं प्रसक्त
म्॥ मेधातिथिस्तु यत्रतत्राश्रमे वसन्निति अनुवादमा
त्रम् गृहस्थेतराश्रमत्रये जितेन्द्रियत्वविधानात्॥ गोवि
न्दराजस्तु· उत्पन्नविनष्टपुत्रस्याश्रमान्तरस्थस्यापीच्छ
या पुत्रार्थं स्वस्त्रीगमने दोषाभावप्रतिपादनार्थमेतत्
॥ यत्रतत्राश्रमे वसन्निति वचनात्पुत्रार्थी संविशेदिति
च प्रस्तुतत्वात्॥ पुत्रस्य च महोपकारकत्वादित्याह॥
तन्नसत्। यतः गोविन्दराजेन विशेषमविहृण्वनात्म
कमंगीकृतमुक्तौ स्वदारसुरतं यतेरपीति॥ एवं दिवा स्त्रि
यं न गच्छेत्। प्राणायामी जले स्नात्वा खरयानोष्ट्रयानगः

तपः स्नात्वा च भुक्त्वा च गत्वा वेश्यां दिवा स्त्रियम्॥१॥ गु
रुं हुंकृत्य त्वंकृत्य विप्रं निर्जित्य वादतः। बध्वा वा वास
साक्षिप्रं प्रसाद्योपवसेद्दिनम्॥ आद्रत्यादियाद्रबल्यास्म
रणात्॥ येदेन ब्राह्मणं जित्वा प्राश्चित्तविधिस्तथा। शिरोत्रो
पोषितः स्नात्वा प्रणिपत्य प्रसादयेत्॥ दिनत्रयमः। तथा सं
योगपतितैर्गत्वा परस्यैव च पोषितम्। अपहृत्य च वित्त
त्वं भवति ब्रह्मराक्षसः॥१॥ धान्यं हृत्वा भवत्याखुः का
स्यं हंसो जलं प्लवः। मधु दंशः पयः काको रसं श्वा नकुलो
घृतम्॥३॥ छुच्छुन्दरिः शुभान् गन्धान् पत्रशाकं च बर्हि
णः। श्वाविन्कृतान्नं विविधमकृतान्नं तु शल्यकः॥४॥
इत्यादि बहुतरं ज्ञेयं तत्तत्कर्मजं जन्म॥ यद्वा तद्वा प
रद्रव्यमपहृत्य बलान्नरः। अवश्यं याति तिर्यक्त्वं ज
ग्ध्वा चैवाहुतं हविः॥५॥ स्त्रियोऽप्येतेन कल्पेन हृत्वा दो
षमवाप्नुयुः। एतेषामेव जन्तूनां भार्यात्वमुपयान्ति ताः
॥५॥ स्वेभ्यः स्वेभ्यस्तु कर्मभ्यश्च्युता वर्णा ह्यनापदि। पा
पान्संसृत्य संसारान् प्रेष्यतां यान्ति शत्रुषु॥६॥ वान्ताः
श्युल्कामुखः प्रेतो विप्रो धर्मात्स्वकाच्युतः। अमेध्यकु
णपाशी च क्षत्रियः कटपूतनः॥७॥ मैत्राक्षज्योतिकः प्रे
तो वैश्यो भवति पूयभुक्। चैलाशकश्च भवति शूद्रो
धर्मात्स्वकाच्युतः॥८॥ यथा यथा निषेवन्ते विषयान्वि
षयात्मकाः। तथा तथा कुशलता तेषां तेषूपजायते॥९
॥ तेभ्यासात्कर्मणां तेषां पापानामल्पबुद्धयः। संप्राप्नु
वन्ति दुःखानि तासु तास्विह योनिषु॥१०॥ तामिस्रादि
षु चोग्रेषु नरकेषु विवर्तनम्। असिपत्रवनादीनि ब
न्धनच्छेदनानि च॥११॥ विविधाश्चैव संपीडाः काको
लूकैश्च भक्षणम्। करम्भवालुकातापान् कुम्भीपा
कांश्च दारुणान्॥१२॥ संभवांश्च वियोनीषु दुःखमा
यासु नित्यशः। शीतातपाभिघातांश्च विविधानि भया

निच॥१३॥असकृद्गर्भवासेषु वासं जन्म च दारुणम्।
बन्धनानि च काष्ठानि परप्रेष्यत्वमेव च॥१४॥बन्धु
प्रियवियोगांश्च संवासं चैव दुर्जनैः। द्रव्यार्जनं च नाशं च
मित्रामित्रस्य चार्जनम्॥१५॥जरां चैवाप्रतीकारां व्या
धिभिश्चोपपीडनम्। क्लेशांश्च विविधांस्तांस्तान् मृ
त्युमेव च दुर्जयम्॥१६॥यादृशेन तु भावेन यद्यत्क
र्म निषेवते। तादृशेन शरीरेण तत्तत्फलमुपाश्नुते।१७।
सुखाभ्युदयिकं चैव नैःश्रेयसकमेव च। प्रवृत्तं च निवृत्तं
च द्विविधं कर्म वैदिकम्॥१८॥इह चामुत्र वा काम्यं प्रवृ
त्तं कर्म कीर्त्यते। निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्य
ते॥१९॥प्रवृत्तं कर्म संसेव्य देवानामेति साम्यताम्॥नि
वृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै॥२०॥एवं सर्वः
समुद्दिष्टः कर्मणां वः फलोदयः। निःश्रेयसकरं कर्म वि
प्रस्येदं निबोधत॥२१॥वेदाभ्यासस्तपो ज्ञानमिन्द्रि
याणां च संयमः। अहिंसा गुरुसेवा च निःश्रेयसकरं
परम्॥२२॥इत्यादयो बहुतरा मन्वादिप्रोक्ता गृहस्थ
धर्मा विस्तरभियाचेहापरस्यन्ते॥ इति श्रीमन्निर्मलसम्प्र
दायाचार्य पण्डितोद्धवसिंह संगृहीत गृहस्थस्मारनधर्म
संग्रहः समाप्तः॥२॥ ॥ ॐ समस्तस्मृतिकारे
भ्यः समस्तगुरुभ्यश्च नमो नमः॥ अथ वानप्रस्थध
र्माणि संगृह्यन्ते॥ ब्रह्मचारी गृहस्थो वा परपश्येद्
वलीपलितमात्मनः। आपत्यस्यैव चापत्यं तदारण्यं
समाश्रयेत्॥ पुत्रेषु दारान्निःक्षिप्य तपावानुगतो व
ने। अग्नीनुपचरेन्नित्यं वन्यमाहारमाहरेत्॥ यदाहा
रो भवेत्तेन पूजयेत्पितृदेवताः। तेनैव पूजयेन्नित्यमति
थिं समुपागतम्॥ ग्रामादाहृत्य वाश्नीयादष्टौ ग्रासान्
समाहितः। स्वाध्यायं च सदा कुर्यात् जटाश्च बिभृयात्त
था॥ तपसा शोषयेन्नित्यं स्वकं चैव कलेवरम्। आर्द्र

वासास्तु हेमन्ते ग्रीष्मे पञ्चतपास्तथा ॥ प्रावृष्याकाश
शायी स्यात् नक्ताशी च सदा भवेत्। चतुर्थकालिकी वा
स्यात् स्यात् षष्ठक एव च ॥ कृच्छ्रैर्वापि नयेत्कालं ब्रह्म
चर्यं च पालयेत्। एवं नीत्वा वने कालं द्विजो ब्रह्माश्र
मी भवेदिति शंखसंहिता ॥ १ ॥ तथा · वानप्रस्थो जटि
लश्चीराजिनवासा ग्रामं च न प्रविशेत्। न फालकृष्टम
धितिष्ठेत्। अकृष्टं मूलफलं संचिन्वीत। ऊर्ध्वरेताः क्षम
शयः। मूलफलभैक्षेणाश्रमागतमतिथिमर्चयेत्। दद्या
देव न प्रतिगृह्णीयात्। त्रिषवणमुदकमुपस्पृशेत्। श्रा
वणकेनाग्निमाधायाहिताग्निः स्यात् वृक्षमूलकः। ऊर्ध्वं
षड्भ्यो मासेभ्यो ऽनग्निरनिकेतः। दद्याद्देवपितृमनु
ष्येभ्यः। स गच्छेत्स्वर्गमानन्त्यमानन्त्यमिति वसिष्ठसं
हिता ॥ २ ॥ एवं · वैखानसो वने मूलफलाशी तपःशील
देवपितृमनुष्यभूतर्षिपूजकः। सर्वातिथिः प्रतिषिद्ध
वर्जं भैक्षमप्युपभुञ्जीत। न फालकृष्टमधितिष्ठेत्। ग्रामं
च न प्रविशेत्। जटिलश्चीराजिनवासा। नातिशांसं भु
ञ्जीतेति गौतमसंहिता ॥ ३ ॥ तथा ॥ अथ विप्रो वनं ग
च्छेद्हित्वा वा सह भार्यया। जितेन्द्रियो वसेत्तत्र नित्यं
श्रौताग्निकर्मकृत् ॥ १ ॥ वन्यैर्मुन्यन्नैर्मेध्यैः श्याम
नीवारकंगुभिः। कन्दमूलफलैः शाकैः स्नेहैश्च फल
संभवैः ॥ २ ॥ सायं प्रातश्च जुहुयात् त्रिकालं स्नानमा
चरेत्। चर्मचीरवासाः स्यात् श्मश्रुलोमजटाध
रः ॥ ३ ॥ पितॄंश्च तर्पयेन्नित्यं देवांश्चाजस्रमर्चयेत् ॥
अर्चयेदतिथीन्नित्यं तथा भृत्यांश्च पोषयेत् ॥ ४ ॥ न किं
चित्प्रतिगृह्णीयात् स्वाध्यायं नित्यमाचरेत्। सर्वसत्त्व
हितोपेतो दान्तश्चाध्यात्मचिन्तकः ॥ ५ ॥ सन्तुष्टः स्वांत
केनित्यं दानशीलः सदा द्विजः। कंचिद्दूरं समास्थाय
तद्वन्यावर्तयेत्सदा ॥ ६ ॥ एकाहिकं त्रकुर्वीत मासिकं वा

थसंचयम्।षाण्मासिकंचाब्दिकंवापत्तार्थंचवनंवसन्
॥७॥त्यक्त्वातत्राग्निनेमासिस्थानमन्यत्समाश्रयेत्।यथा
वदग्निहोत्रंतुसमिदाज्यैस्तुपालयेत्॥८॥चान्द्रकृच्छ्रपरा
काद्यैःपक्षमासोपवासकैः।त्रिरात्रैरेकरात्रैश्चआश्रमस्थः
क्षिपेद्बुधः॥९॥निष्ठत्वाग्रनिकस्तत्रस्वाध्यायपरस्तथानिशि
।अतन्द्रितोभवेन्नित्यंवासरंप्रणयेन्नयेत्॥१०॥योगाभ्यासर
तोनित्यंस्थानासनविहारवान्।हेमन्तग्रीष्मवर्षासुजला
ग्न्याकाशमाश्रयेत्॥११॥दन्तोलूखलिकोवापिकालप
क्वभुगेववा।स्यादश्मकुट्टकोविप्रःफलस्नेहंश्चकर्मकृ
त्॥१२॥शत्रौमित्रेसमःशान्तःतथैवसुखदुःखयोः।सम
स्तेष्वपिसर्वेषुनवसेद्गह्वरंवनम्॥१३॥म्लेच्छव्याप्तानि
सर्वाणिवनानिस्युःकलौयुगे।नभूपाःशासितारश्चग्रा
मेयान्निवसेद्द्विजः॥१४॥एवं·धेनुपूर्वंवसिष्ठस्यह्यासीद्द्व
र्वाससोपिच।वनवासाश्रमस्यस्यवह्निकार्यायतंश्र
येत्॥१५॥फलस्नेहायदानस्युःकालदैगुण्यतोद्विजाः
तदागोदुग्धसर्पिर्भ्यामग्निकार्यंसमापयेत्॥१६॥तदास
र्वेषुकालेषुतथासर्वाश्रमेषुच।गोदुग्धादिपवित्रंस्यात्
सर्वकार्येषुसत्तमाः॥१७॥अथवावनवासिषुसर्वेषुभि
क्षांकुर्याद्वनाश्रमी।तदासर्वंप्रकुर्वीतपितृदेवार्चनादि
कम्॥१८॥अष्टौभुञ्जीतवाग्रासान्ग्रामादाहृत्यप
लवान्।वासनासंक्षयंगच्छेदनिलाशःप्रागुदीचिकाः
॥१९॥विधायविप्रोवनवासधर्मान्सर्वानिमानुक्तवि
धिक्रमेण।संशोध्यपापानिवपुर्विशोध्यब्रह्माधिगा
च्छेत्परमंद्विजेन्द्राः॥२०॥एवं·वानप्रस्थश्चतुर्भेदोवैखा
नसउदुम्बरः।फेनयोबालखिल्यश्चतल्लक्षणमथो
च्यते॥२१॥फलैर्मूलैरकृष्टान्नैरग्निकर्मवनेवसन्।
कुर्यात्पञ्चमहायज्ञानसवैखानसआत्मवित्॥२२॥
प्रातर्दृष्टदिगातीतैःफलाकृष्टान्नेन्धनैः॥उदुम्बरो

वृ.प.
५०

महाज्ञानीयज्ञ्चयज्ञाग्निकर्महात् ॥२३॥ चतुरा
श्रमसङ्करग्निकार्यंकुर्वन्नेवसन् । फलमूलैर्हेवन्यैर्व
नान्नैः श्रुतिचोदितैः ॥२४॥ ऊढ्त्वपरिपूताङ्गः तथापति
तवृत्तिकः । अन्येवेन्यैर्देनान्नैश्चकेनयः पञ्चयज्ञकृत् ॥
२५ ॥ वनस्थोवालखिल्येभ्यः सौवस्त्रैवल्कलचीवरम्
। अग्निकर्महदात्मज्ञ ऊर्जीनासंचितंत्यजेत् ॥ २६ ॥
इतिपराशरसंहिता ॥ ४ ॥ तथा॰ अवश्यमाश्रमेवासः
कर्तव्यस्तद्गतोविधिः । सोहंगृहीत्वानियमंतपस्विजन
भूषणम् । जटाःकृत्वागमिष्यामि॰ न्यग्रोधक्षीरमानय
। तत्क्षीरंराजपुत्रायगुहःक्षिप्रमुपाहरत् । लक्ष्मणस्या
त्मनश्चैवरामस्तेनाकरोज्जटाः । तौतदाचीरसंपन्नौज
टामण्डलधारिणौअशोभेतामृषिसमौभ्रातरौरामल
क्ष्मणौ । ततोवैखानसंमार्गमास्थितःसहलक्ष्मणइति
वाल्मीक्याम् ॥ आश्रमेजनरहितदेशे । वासः । कर्तव्य
स्तद्गतः । आश्रमवासोचितः ॥ विधिः । जटाश्मश्रुधारणा
दिरूपश्चैतानींकर्तव्यः । सोहंनियमम् । वन्याहारभूष
यनजटादिरूपंगृहीत्वा । वैखानसंमार्गम् । वानप्रस्था
श्रमधर्मम् । आस्थितः । प्राप्तः । लक्ष्मणेनसहरामइ
त्यर्थःकाण्डम् ॥ ॥ तथा॰ अत्रमूलेंगगारूपतीर्थमा
मावमेप्रयागरूपतीर्थेराजमासौनद्यग्रेपितृमरणश्र
वणेपियन्नुण्डनाकरणंरामलक्ष्मणयोः तथागृहव
सिभरतशत्रुघ्नयोरपितेनानेनपरकृतिरूपाध्यवा
देनक्षत्रियाणांतीर्थादिष्वपिमुण्डननिषेधप्रतीमद्रूमै
वंश्रीरामीयरामायणटीकायांचजटाकेशादिधारणरू
पोधर्मः क्षत्रियादीनांविहितइति ॥ एवमग्रेपिभरत
हनुमत्समागमे । हनुमान् । ददर्शभरतंदीनंकृश
माश्रमवासिनम् । जटिलंमलदिग्धाङ्गं॰ भ्रातृव्यसन
कर्शितम् । फलमूलाशिनंदान्तंतापसंधर्मचारिण

म। समुन्नतजटाभारं वल्कलाजिनवाससम्। उपस्थि
तममात्यैश्च शुचिभिश्च पुरोहितैः। वल्कलैश्च गुरुकैश्च
काषायाम्बरधारिभिरित्यनेन सह दानस्य पुरोहितभृ
त्यादीनां गृहवासिनामपि जटाकाषायाम्बरादि धर्मो
दर्शितः। एवं युधिष्ठिराद्यनन्तराजर्षीणां। दशरथब
ध्यश्रवणाद्यनन्तवैश्यर्षीणां। शबरीविदुरमातंगा
द्यनन्तशूद्राणां च जटाकाषायाम्बराद्याश्रमधर्मल
त्र तत्र प्रदर्शितं जहनीयो विद्वद्भिः। अग्रे प्येषां भिक्षाट
नस्नानादि धर्माः कथ्यंते॥ इति श्रीमन्निर्मल संप्रदाया
नुपण्डितोद्धवसिंह संगृहीतवानप्रस्थस्मृतिधर्मसं
ग्रहः समाप्तः॥ ॥ ॐ २॥ ॐ समूलस्मृतिकारके
भ्यः स्वमतगुरुभ्यश्च नमो नमः अथानेकजन्मार्जित
निष्कामकर्मवतां वीतरागाणां मुमुक्षूणां मोक्षायच
तुर्थाश्रमधर्माणि संगृह्यंते॥ अत्रादौ संन्यासे कालवि
चारः तथाहि आश्रमादाश्रमं गत्वा हुतहोमो जितें-
द्रियः। भिक्षाबलिपरिश्रान्तः प्रव्रजन्प्रेत्य वर्द्धते॥ यो
दत्वा सर्वभूतेभ्यः प्रव्रजत्यभयं गृहात्। तस्य तेजोम
या लोकाः भवन्ति ब्रह्मवादिन इति मनुस्मृतौ। एवं
संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया। प्रव्रजन्त्यकृ
तोद्वाहाः परं वैराग्यमाश्रिता इति बृहस्पतिस्मृतौ॥
एवं ब्रह्मचर्य्यं परिसमाप्य गृही भवेत् गृही भूत्वा व-
नी भवेत् वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्य्या
देव प्रव्रजेत् गृहाद्वा वनाद्वेति जाबालश्रुतौ च संन्या
सकालः श्रूयते अत्र स्त्र्यादिविषयेषु रागादिसत्त्वे प्रथ
मः पक्षः। इतरथा रागाद्यसत्त्वे उत्कटवैराग्याद्द्विती
यः पक्ष उक्तः ननु धीरस्य विधिवद्दारान् पुत्रांश्चोत्पा
द्य धर्मतः। इष्ट्वा च शक्तितो यज्ञैः मनो मोक्षे निवेशये
त्॥ एवं ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशये

त्। अनपाकृत्यमोक्षंतुसेवमानोव्रजत्यधइत्यादि
मन्वादिवचनविरोधात् ब्रह्मचर्यात्प्रव्रजनं नसं
भवतीति चेन्न अकृतदारादिपरिग्रहस्य पुरुष
स्य पुत्राद्युत्पादनेऽनधिकारात्। विवाहस्य च रा
गप्राप्तत्वात्॥ नच ऋणत्रयापाकरणविधिरेवदा
दीनाक्षिपतीति शंकनीयम्॥ विद्याधनाद्यर्जनवत् रा
गादिप्रयुक्तदारादिग्रहणसंभवे विधेरौदासीन्यनाक्षेपकत्व
त्। ननु जायमानो वै ब्राह्मणस्त्रिभिरृणवान् जायते।
ब्रह्मचर्येण ऋषिभ्यः॥ यज्ञेन देवेभ्यः प्रजया पितृभ्यः
। एष वा अनृणी यः पुत्री यज्वा ब्रह्मचारी· इति स्मरणा
त् जातमात्रस्यैव प्रजोत्पादनादीन्यावश्यकानीति
चेन्न न हि जातमात्रोकृतदाराग्निपरिग्रहो यज्ञादि
ष्वधिक्रियते तस्मादधिकारी जायमानो ब्राह्मणादि
र्यज्ञादीननुतिष्ठेदिति तस्यार्थः अतश्चोपनीतस्य
वेदाध्ययनमेवावश्यकम्। कृतदाराग्निपरिग्रहस्य
पुरुषस्य प्रजोत्पादनादिरपि अत एवाविवाहितानां
मृतपतिकानां वा यथा निपुत्री शबरी सुलभादिस्त्री
णां भारतादिषु वानप्रस्थसंन्यासधर्मप्रतिपादनम
पि साधु संगच्छते। तासामपि प्रजाद्युत्पादनेऽनधि
कारादिति निर्दुष्टः पन्थाः इति संन्यासे कालविचा
रः। अत्र चतुर्थाश्रमविहितत्रिदंडैकदंडादिविद्वत्सं
न्यासे ब्राह्मणस्यैवाधिकारः॥ प्राजापत्यां निरूप्ये
ष्टिं सर्ववेदसदक्षिणाम्। आत्मन्यग्नीन्समारोप्य ब्रा
ह्मणः प्रव्रजेद्गृहात्॥ तथा· एष वोऽभिहितो धर्मो ब्राह्मण
स्य चतुर्विधः इत्युपक्रमोपसंहाराभ्यां मनुना ब्राह्मणस्यै
व संन्यासाधिकारप्रतिपादनात्॥ ब्राह्मणः प्रव्रजन्तीति
श्रुतेश्चाग्रजन्मन एवाधिकारो न द्विजातिमात्रस्येति
केचिदाहुः अन्ये तु मनुस्मृतौ त्रैवर्णिकानां प्रकृतत्वा

न॥संन्यासविधौब्राह्मणपदस्यचक्षत्रियवैश्योपल
क्षकत्वात् जायमानोवैब्राह्मणस्त्रिभिर्ऋणवान्जायेत
इत्यादिस्मृतिस्थब्राह्मणपदवत् अन्यथाचरणादि
मत्त्वमपिब्राह्मणस्यैवस्यात्॥मनूक्तब्राह्मणपदस्यअग्नि
होत्रव्रतपरान् स्वाध्यायनिरतान्शुचीन्।उपवासरता
न्दान्तान् तान्देवाब्राह्मणंविदुः॥क्षांतंदान्तंजितक्रो
धंजितात्मानंजितेन्द्रियम्।तमेवब्राह्मणंमन्येशेषाःशू
द्राइतिस्मृतावित्यादिभारताद्युक्तलक्षणक्षत्रियवैश्यसा
धारणब्राह्मणपरत्वाच्च।एवं·त्रयाणांवर्णानांवेदमधी
त्यचत्वारआश्रमाइतिसूत्रकारवचनात्॥एवं·अक्षा
र्येकारिणांदानंवेगोनद्याश्वशुद्धिकृत्।शोध्यस्यमृच्चते
यंच·संन्यासोवैद्विजन्मनामितियाज्ञवल्क्येनद्विज
न्मनांब्राह्मणक्षत्रियविशांपापशोधकसंन्यासस्य
प्राप्तिबोधनात्॥एवंब्राह्मणःक्षत्रियोवापि·वैश्यो
वाप्रव्रजेद्गृहात्॥त्रयाणांवर्णानांवेदमधीत्यचत्वा
रआश्रमाइतिस्मृत्यन्तरेक्षत्रियवैश्ययोरपिसाक्षात्सं
न्यासविधानाच्चद्विजातिमात्रस्यनियतशिखात्रिद
ण्डादिः नियतकेशाजटैकदण्डादिः अनियतमुण्डैन
कदण्डादिमत्त्वास्त्रोक्तसचिह्नसंन्यासेधिकारः
स्फुटीभविष्यतिचेदंवैलक्षण्यंसंन्यासविभागावस
रेनचाप्युक्तवचनानांक्षत्रियवैश्यसाधारणत्वमचि
ह्नसंन्यासपरत्वंसचिह्नसंन्यासबोधकपदाभावादिति
वाच्यम् दण्डादिचिह्नरहितसंन्यासेशूद्राणामप्यधि
कारात् तन्निवर्तकस्यत्रयाणांवर्णानामित्यस्यद्विजन्म
नामित्यस्यचग्रहणानुपपत्तेरित्याहुः नन्वेकदंडत्रिदण्डा
दिचिह्नरहितसंन्यासेपिशूद्रसाधारणसर्ववर्णानांक
थमधिकारःतद्बोधकप्रमाणाभावादितिचेन्न नानाप्र
माणसंभवात्।तथाहि।भारते·राजधर्मे·अध्याये ६३॥

श्लो·१४ शूद्रवैश्यक्षत्रियाणांक्रमशः संन्यासबोध
कभीष्मवचनम्॥ अस्यानन्तरगतस्यापि दृश्यं धर्मगत
स्य वा। आश्रमा विहिताः सर्वे वर्जयित्वा निराशिषम्॥
भैक्ष्यचर्यां ततः प्राहुः तस्य तद्धर्मचारिणः। तथा वैश्य
स्य राजेन्द्र राजपुत्रस्य चैव हीति॥ अस्यार्थः॥ निराशि
षं। शान्तिदान्त्यादिकल्याणगुणरहितं शूद्रं॥ तस्य शू
द्रस्य॥ शूद्रोपि नैष्ठिकं ब्रह्मचर्यं वा वानप्रस्थं वा रण्ड
मुण्डनादिचिह्नरहितं सकलविक्षेपककर्मत्यागरूपं सं
न्यासं वा तु तिष्ठेदेवेति नीलकण्ठमुक्तः॥ एवं· अथ
धर्मयुगे तस्मिन्· योगधर्ममनुष्ठिता। महीमनुचचारै
का· सुलभा नाम भिक्षुकी॥ साहं तस्मिन्कुले जाता भर्त
र्यसति मद्विधे· विनीता मोक्षधर्मेषु चराम्येका मुनिव्रत
मित्यादि भारते मोक्षधर्मे अ·३२०। श्लो·७॥ भिक्षुकी
त्यनेन· मुनिव्रतमित्यनेन च स्त्रीणामपि त्रिवर्णानु
सारेण प्रागविवाहाद्वैधव्यादूर्ध्वं वा नैष्ठिकब्रह्मच
र्ये· त्रिदण्डादिचिह्नेन संन्यासे चाधिकारो दर्शितः।
तेन भिक्षाचर्यं मोक्षशास्त्रश्रवणमेकैकयात्मध्या
नं स्त्रीभिरपि कर्तव्यम् एवं· एकाश्रमः प्रव्रजितान्त
रेण सहायः। संन्यासिनीभिः स्त्रीभिश्च स्त्रीणां चैक
इति बौधायनेन स्त्रीणामपि प्रव्रज्यास्मरणम्॥ एवं·
हस्तादानो मुखादानो नियतो वृक्षमूलकः। वानप्र·
स्थो भविष्यामि अदृष्ट्वा जनकात्मजाम्॥ तापसो वा
भविष्यामि नियतो वृक्षमूलकः। तापसः। संन्यासी॥
इति लंकायामध्याये १४ जानकीलाभहनुमद्वचन
म अनेन वानरजातेरपि वानप्रस्थसंन्यासयोरधि
कारो दर्शितः किमु मनुष्यस्येति ननु स्त्रीशूद्रौ नाधी
यातामिति श्रुत्या वैदिकमन्त्रानध्ययनात् नन्वयुक्तः सं
न्यासानुपपत्तिः। एवं· न शक्यमिह शूद्रेण लिंगमाश्रि

त्यवर्तितुं। आस्यतां परिते बुद्धिः शुश्रूषा निरतो भव।
शुश्रूषया परं लोकान् अवाप्स्यसि न संशयः इत्यनु
क्तत्वात् संन्यासचिह्ननिषेधाच्च कथं संन्यासोपपत्तिः
स्त्रीशूद्रयोरिति चेन्न वैदिकमन्त्रसाध्यसचिह्नसंन्या
साभिधानात् विक्षेपककर्मत्यागलक्षणसंन्यासेन
तान्त्रिकपौराणिकमन्त्रैः परमेश्वरोपासनादेः संभवान्न
दोषः अत्र भिक्षुपंक्तिरूपकत्वं कथायां च डालरजक
दिपात्रबहिष्कृतशूद्रस्त्रीणां वा। शमदमादिगुणरहिता
जितेन्द्रियाणां संन्यासविधावेव निराशिषपदेन निषिद्ध
त्वात् सर्वे शूद्रस्त्रीणां वा संन्यासादिमात्रनिषेधपरत्वेनो
क्तवचनम् अत एव गार्गीमैत्रेयीप्रभृतिस्त्रीणां वेदश्र
वणम् शूद्राशबरीक्षत्रियासुलभादीनां वानप्रस्थसं
न्यासचिह्नम् शूद्रविदुरादीनामाकाशवाण्युक्तसंन्य
सादिकमपि साधु संगच्छते॥ इति संन्यासेऽधिकारः॥
अत्र संन्यासिभिक्षवः विविदिषासंन्यासि·विद्वत्सं
न्यासिभेदाद्द्विविधः आद्यः पुनर्द्विविधः एकदण्ड
त्रिदण्डभेदात्। तत्र वैदिकचतुर्थाश्रमीयत्रिकालसंध्या
स्नानादिधर्मयुक्ताः एकदण्डकमण्डलुकषायाम्बर
जटाश्मश्र्वादिचिह्नयुक्ताः संन्यासिनः प्रथमः तथोक्त
विधधर्मयुक्ताः त्रिदण्डकमण्डलुकषायाम्बरयज्ञोप
वीतशिखादियुक्ताः संन्यासिनः परे इति। एतयोर्वा सव
र्णाश्रमधर्मत्यागित्रिगुणातीतपरमहंससंन्यासो ना
मैव मुण्डनं शिखाजटादिचिह्नं चेष्टिकर्म सर्वं चैतत्स
प्रमाणं गद्ये संन्यासिविभागे परिस्फुटीभविष्यति स्फुटः।

पं·१२॥ गाँदिना·मंदालसचूडालादियोगविद्यां·लीलावतीविद्भि
चकादीनां ब्रह्मविद्यां·धर्मव्याधनारदगुर्वादिधर्मवि
द्यां· श्रवणमातंगवाल्मीकादिमुनीनां ग्रहणम्॥पं·१२॥

शिखीचेति गौतमस्मरणात्। एवं· कषायी मुण्डः त्रिदं
डी कमण्डलु पवित्र पादुकासन कन्थामात्र इति देवल
स्मरणात्। एवं· साधुवृत्तिर्द्विजो यस्तु भिक्षाभुगात्मवि
त्तकः। बहूदकस्त्वयं ज्ञेयः परिव्राट् सत्रिदण्डधृगिति·
एकदण्डधरा हंसाः शिखोपवीतधारिण इति· एकदण्
धरा मुण्डाः कन्थाकौपीनवाससः इति च तत्र तत्र परा
शरस्मरणात्। अत्र मुण्डैकदण्डत्रिदण्डादिर्यथायो
ग्यं परमहंस हंस कुटीचरादीनामसाधारणो धर्मः। कमण्ड
लुकषायाम्बरकेशजटाश्मश्र्वादि तु साधारणो धर्मः। के
शादि मुण्डनस्य केशलोमनखान्वाप्य वानप्रस्थोमु
निस्ततः आश्रमादाश्रमं पुण्यं पूतो गच्छति कर्मभिरि
ति स्मृत्या पुण्याश्रमपदाभिधेये मुख्य संन्यास एवाभिधा
नात्। दण्डस्य चेतरेष्वप्राप्तत्वात्। मुख्यजातानामयं धर्मो
वैष्णवलिंगधारणम्। बाहूजातोरुजातानां नायं धर्मो
विधीयते इत्यादिस्मृतिरप्युक्तविशेषलिंगनिषेधपरैवे
ति न त्वशेषवैकोहमेकाह मेकैकस्मिन्वनस्पतौ। चरन्भै
क्ष्यं मुनिर्मुण्डः क्षपयिष्ये कलेवरमिति युधिष्ठिरवचन
त् मुण्डनादिधर्मोपि सर्वसाधारणः स्यादिति चेन्न युधि
ष्ठिरवाक्यस्य तत्रैव भारते वनपर्वे· धर्मव्यतिक्रमं चैव
मन्यते सूक्ष्मदर्शिन इत्यादि भीमवाक्येन क्षत्रियादे
र्मौण्ड्यादिकं लिंगं निषिद्धं तस्याचरणे धर्मव्यतिक्रमः स्या
देति तद्व्याख्यातृ नीलकण्ठवचनेन च निषेधात्। तथ्य·
क्षत्रियवैश्ययोस्त्यागं चरन्भैक्ष्यं मुनिर्मुण्डः इत्युक्तविधं
संन्यासं न परिचक्षते। न प्रशंसन्तीति तत्रैव वचनान्तरेण नि
षेधाच्च यद्वा युधिष्ठिरवाक्यस्य क्षत्रियवैश्य साधारणाद
ण्डमुण्डनत्वान्वितं चतुर्थपरमहंसाश्रमविधानपरत्वा
न्न दोषः एवं· वानप्रस्थं भैक्ष्यचर्य्यं· गार्हस्थ्यं च महाश्र
मं। ब्रह्मचर्याश्रमं प्राहुः चतुर्थं ब्राह्मणैर्वृतम्। जटाधा

रणसंस्कारद्विजातित्वमवाप्य चेति भारते ॥ चतुर्थे संन्या
सम् ॥ एतद्धानमस्थ्यादिसर्वाश्रमाद्विजातित्वमवाप्य त
दाधारणमवाप्यैव चभर्वाश्रमान्यत्वेन विविदिषासंन्यासे
पि जटादेरविधानाच्च एवमेवानेकधर्मगोविष्णुवर्णाश्र
मसर्वसाधारणकेशजटादिधर्मो विहितः ॥ तथाहि श्रुतौ
वाजटिलो वा स्यात् अथवा स्याच्छिखाजटः इति मनूक्तब्र
ह्मचारिधर्मः एवं गृहस्थेपि ॥ स्वधर्मा चीरवासा वा श्मश्रु
लो विजने वने ॥ मांजादयं चरेल्लोकं अदम्भ केशमा
हिनदूतिमाश्रित्यदूषैमनुः ॥ गर्थमाल्यमदानेन कीर्ति
भैवति श्रुकला केशश्मश्रुधारयन्तामन्यामवति संग
तिरि तिहानधर्मे भीष्मः ॥ वसीत चर्म चीरं वा सायं स्नाया
त्प्रगे तथा जटाश्च विभृयान्नित्यं श्मश्रुलोमनखानि
चेति मनूक्तवानप्रस्थधर्मः ॥ क्लृप्तकेशनखश्मश्रुपा
त्री दण्डी कुसुम्भवान् । विचरेन्नियतो नित्यं सर्वभूता
न्यपीडयन्निति मनूक्तसंन्यासिधर्मः ॥ एवं श्रुतस्मार्त
धरोनीचकेशश्मश्रुनखः शुचिरिति ब्रह्मचारिणी
श्मश्रुजटालोमभृदात्मवानिति वानप्रस्थे चयासु
वस्कलः ॥ एवं केशरोमनखश्मश्रून्छित्वा ल्लापिक
नेयेन त्यजन्शरीरसौहार्दं वनवासरतः शुचिरिति
वानप्रस्थधर्मे स्त्री ॥ तथा श्मश्रुत्रिमुखजानिरोमा
णिजटा रूपाश्च शिरोरुहान् काशाद्दीनिच्छेत्सार्जवि
भृयादित्यादिभिर्नाहरकारः ॥ एवं आदेशजटिलसं
न्यासीदलोनारायणः शिवः दुर्वासोथामदेवश्च

---

सुकेशीसुधिरवोवास्यान् गृहस्थः सौम्यगैपवाख्यितिब्रह्म
चारिप्रकरणे हारीतादिभिर्बहुतरमुक्तं तद्भेपमत्र १७ ॥ अत्रह्म
पुसामध्ये अन्यथा वानप्रस्थोपतिर्वा स्यात् सदैव श्मश्रु
रोमधृतदूति हारितादिप्रोक्तबहुस्मृतिविरोधापत्तेः ॥ ११ ॥

भरतः कपिलस्तथा। स्वेतकेतुरोहिताद्याः सनत्कुम
रएवच। दत्तात्रेयो जटिलाः सिद्धाः संन्यासे क्षौरवर्जि
ताद् इत्यादि शिष्टाचारः॥ एवं सप्तरोहितामान्यभरता
दीनां रामादीनां च राजर्षीणां सप्रमाणं जटादिधारणं पूर्व
मेवोक्तम्॥ युधिष्ठिरादिभिरपि जटादिधारणं कृतं। भ
रते वनपर्वे अ० १०।११ यदृच्छया धर्मराजेन दृष्टवान्का
म्यके वने। तं जटाजिनसंवीतं तपोवननिवासिनमि
त्यादेः श्रवणात्॥ एवं सत्यवानमान्धातादिवोदासवि
श्वामित्रप्रभृतीनां राजर्षीणां॥ तथा श्रवणादिवेश्य
नाम्॥ शबरीमातङ्गविदुरादिशूद्राणामपि केशजटा
दिधारणं सप्रमाणम्॥ सावित्रीनतडस्यापकेश्यानं
यस्य भामिनि। पतिव्रतस्या यथा मासस्कन्धाश्रमरिगृ
ह्यवैहतिभाव· अ·२९७।७२ श्रवणात्॥ शबर्यास्ता
वपि दृष्टा रामेण· इत्येवमुक्ताजटिला कृष्णाजिनाम्बरे
इत्यादितत्पुराणवाक्यश्रवणात्॥ अत्र यद्यपि यच्च सं
तानजास्येषाः श्रेदोषा देहसम्भवाः श्रेषापि निर्दहेत् सर्व
नःशुभानि शिवकाञ्चनमितिमरोञ्चनात्। त्रिदण्डकम
ण्डलुं शिक्यं पात्रं जलपवित्रं शिखां यज्ञोपवीतं चेत्यत
त्सर्वं भूःस्वाहा इत्यप्सुपरित्यज्यात्मानमन्विच्छेदिति
मन्त्राच्चत्रिदण्डादियज्ञोपवीतान्तच्छेदनं चतुर्थाश्रम
हंसाश्रमे प्रमाणसिद्धम्। तथापि वैदिकमन्त्रादिसंस्का
ररहितं सर्ववर्णसाधारणं च तत् हंसानामपि पुनर्मुण्डनं
इतरेषां मुण्डनं तत्वार्थधर्मविरुद्धमेव शास्त्राविहिता
चरणं चानिष्टसाधनम्· स्वधर्मे निधनं श्रेयः परधर्मो
भयावह इति भगवद्वचनात्। वरं स्वधर्मो विगुणो न पा
रक्यः स्वनुष्ठितः। परधर्मेण जीवन्हि सद्यः पतति जातित
इति मनुवचनाच्च। अस्यपरिव्राट्मुण्डो विवर्णवासस्त्वु
पकस्य भरतैवतकप्रभृतयोरस्तुन्मनाकुमनवदाच

रतत्त्वादि जाबालीके भरतादिक्षत्रियाणामपि मोराड
उन्मत्तचर्याच श्रूयते तस्यापि नंशाकाम्. एतद्वाक्यस्य
संन्यासविधिस्तु निपरत्वादित्येके. एवमुक्ततत्त्वसंप्रदा
येपि प्राधान्यतयाकेशजटादिधर्मदर्शनात् उक्तमंत्रा
दीनांशिखामात्रच्छेदनेनान्यथानसर्वमुण्डनं तन्त्रिक
मेवेत्यपरे. वस्तुतो जाबालीकोक्तवाक्यानां. सर्वमुण्ड
नेविधेरश्रवणेनोन्मत्तवदित्यादिश्रवणेनचानेकज
न्मार्जिताभ्यासवशात्परोक्षब्रह्मदर्शीनिस्त्रैगुण्यपरम
हंससंन्यासिभरतादीनामेवाचारदर्शनपरत्वान्नसर्वमु
ण्डनपरत्वमितितद्युक्तं। निस्त्रैगुण्येपथि विचरतांकोवि
धिःकोनिषेधइति अत्रपराशरोक्तयतिविभागादप्ये
वमेवज्ञायते। तथाहि चतुर्भेदःपरिव्राट्स्यात्कुटीचरब
हूदकौ। हंसःपरमहंसश्च वक्ष्यन्तेतेपृथक्पृथक्।१। पुत्र
स्यभ्रातृपुत्रस्यभ्रातृदौहित्रयोरपि। तद्गृहान्तकुटीसंस्थायः
सभैक्ष्यवृत्तिमुग्द्विजः।२। प्रातिचार्यकृतःसोपियोवा
सःपूतवारिपः कन्थात्रिदण्डभृच्छान्तःआत्मवृत्तःस
कुटीचरः।३। सशिखायज्ञोपवीतइतिकुटीचरः। एवं
रूपोबहूदकोनामयःशिखासनोपवीतानिधातुका
षायवस्त्रभृत्।४। साधुवृत्तिर्द्विजोकस्तुभिक्षाभाग
त्मचिन्तकः। बहूदकस्त्वयंज्ञेयोयःपरिव्राट्त्रिदण्डभृत्
।५। इतिसशिखाबहूदकाः। एवं. एकदण्डधराहंसाःशिखो
पवीतधारिणः। वाक्याचारकराःशान्ताभूतानामभयप्रदाः
।६। वसन्त्येककपालाग्रामेनगरेपञ्चशर्वरीः। कर्शयन्तोव्रतै
र्देहमात्मध्यानरताःसदाः।७। इतिसशिखैकाहंसः। एवं।
एकदण्डधरामुण्डाःकंथाकौपीनवाससः अव्यक्तलिं
गिनोव्यक्ताःसर्वदैवचमौनिनः।८। शिखादिरहिताःशा
न्ताःउन्मत्तवेषधारिणः भग्नशून्यालयैकस्तुवासिनो
ब्रह्मचिन्तकाः।९।। एतेपरमहंसावैनैष्ठिकाब्रह्मभि

स्व:॥ उक्तास्तु तत्र भेदैरात्मनः सार्थनाकराः॥१०॥ इत्थं
निर्द्वन्द्वो वर्णाश्रमचिह्नरहितो ऽयमेवोपदेशः शिखादिसं
न्यासपूर्व्यः परमहंसः चतुर्थ इति पराशरोक्तविभागः॥
अत्र कुटीचरबहूदकाविति त्रिदण्डिनां भेदः हंसपरमहं
साविति एकदण्डिनां भेद इति साम्प्रदायकः अत्र कुटीचरा
दिपदानां मुख्यार्थविचारेण वक्ष्यमाणविहङ्गिस्तु सः धार
णोप्ययं विभागः संभवति तथा हि ये गमने स्वसमर्थाः वृद्धा
रोगगृहीताः विकलेन्द्रियाः तपोभिः कृशीभूताः ये गृहेषु वस
न्ति ते एव कुटीचराः॥ ये गमने समर्थाः नीरुजो युवानः सर्व
दा तीर्थेषु पर्यटन्ति बहूजलपानशीलास्ते एव बहूदकाः॥
एतयोरपि ये संन्यासाश्रमविहितचिह्नान्तरङ्गधर्मनिर
ताः सर्वदा पुरुषोत्तमास्ते हंसाः॥ ये च वर्णाश्रमचिह्नरहि
ता दिगम्बराः सर्वदा मौनयुक्ता अनेकजन्मार्जितपुण्यव
शात्सवैराग्यध्यानपरायणा निस्नेहयुक्ता अपरोक्षब्रह्म
दर्शिनस्ते एव सर्वोत्तमाः परमहंसा इति॥ अत्र च चतुर्वि
धो भिक्षुकः स्यात्कुटीचरबहूदकौ हंसः परमहंसश्च यो
यः पश्चात्स उत्तम इति वीतस्पामुख्याप्रख्यः सर्वसंन्यासि
विभाग एव तात्पर्यमवगन्तव्यमिति न चाचार्यस्यापि शं
करभगवतोऽनुपदेशं श्रूयते इति शिष्टाचारात्सर्वेऽनुपदन
मिति चेन्न संप्रदायपरत्वे धर्मानुष्ठाने चाशास्त्रार्थवादव
स्यैव प्रमाणत्वात् तस्माच्छास्त्रं प्रमाणं ते कार्याकार्य
व्यवस्थिताविति स्मरणात् समर्थो चरणानुशास्त्रविहितमे
व धर्मप्रयोजकम्॥ अन्यथा भगवता दत्तात्रेयेणैकमुखेन
वेदाचारणं द्वितीयेन मद्यपानं कृतं येन नारीमुखचुम्बनं
सहस्रबाहुराजानं रेवन्यां दर्शितं तद्दृष्टान्तेनेदानीमपि सर्वे
संन्यासिनस्तथा भवेयुः॥ एवमृषिविश्वामित्रेण श्वाङ्गं नवसि
ष्ठशतपुत्रा घातितास्तथेदानीमपि क्षत्रिया घ्नन्तु॥ एवं सोमेन
गुरुस्त्री संहृता द्रौपद्या पञ्चभर्तारः कृतास्तथाद्यापि स्त्रि-

परित्यागः कुर्युः। अत्यन्ताभावार्थस्याविहितानाचरणमप्यसि
त्वयि न। सर्वधर्मपरित्यागस्य सर्वथानुपपन्नत्वात्। किं च सर्वधर्मानु
रूपेण विहिताविहितसर्वाचारत्यागे भवेन्नास्तिकधर्मरूपत्वमा
पत्तेरनाश्रयः। यथा लोके रक्षोगणस्य मुनिना मानुषमांसभ
क्षणम्। भगवता कृष्णेन चलितर्देहहननम्। नोनुद्देरूपधर्म
नाशिकाराक्षसो वाना पिशाचभासुरीषु नारायणस्य मिथ्यापितृमु
ख्यसंन्यासि निवेदकः॥ ननु च नाथेन्द्रस्य हस्तामिराम्नायेन्द्र
शास्त्रानि च। कलेर्यथा गमिष्यन्ति तद्वर्जैतापरिग्रहः॥ संन्या
सस्थ न कर्तुं मोक्षाय तेन विपश्चिता। अश्वमेधं गवालम्भं
संन्यासं पलपैतृकम्। देवराच्च सुतोत्पत्तिं कलौ पञ्च विव
र्जयेदित्यादिभिर्निषेधात्कथमिदानीं संन्यासधर्मः स्या
दिति चेन्न संन्यासस्य कलिदोषप्राधान्येन दुर्लभत्वाभिप्रा
यतात्पर्यकत्वात्॥ लोकोपकारमात्रार्थकत्वात्त्रिदण्डादिविहि
त संन्यासस्य निषेधेपि सर्वसाधारणविविदिषापूर्वकसर्वनि
क्षेपकर्मत्यागलक्षणान्तरङ्ग संन्यासस्यानिषेधाच्च। अत
एवोक्तं स्मृत्यासविहितं मुख्याश्रमनिषेधात्। आत्मज्ञाने च
दृष्टया उक्तास्तदिह मनीषिभिः तैस्तैः सर्वैः समन्वयो ज्ञान
योग्योपदेशतः॥ न वेदैर्न यज्ञैर्न तपसा न शास्त्रैर्न बहुभिः श्रुतैः।
न यज्ञैर्न जपैर्होमैः शौचैर्वाप्यन्तरापि न॥ गुरूपदेशतो भक्त्या
सम्यगभ्यासतस्तथा। ज्ञातव्यः परमात्मैव भक्तिनैरन्तर्येण
वेति पराशरादि स्मृत्या॥ न कर्मणा न प्रजया न धनेन त्यागेनै
केन अमृतत्वमानशुरित्यादिश्रुत्या च गुरूपदेशादित्थमिह सर्व
कर्मत्यागलक्षणसंन्यासादेरेव च प्राधान्यतया ज्ञानद्वारा मोक्ष
साधनत्वाभ्युपगमाच्च सम्प्रदायप्रवर्तकैरपि दण्डादिमुक्तियोग्यता
भिप्रायाहिनामधेयैः स्वसम्प्रदायाचार्यैः तथा श्रीरामानन्द श्रीगुरु

नानकप्रभृतिभिस्तत्त्वाचार्य्यैः परम्परया कृतो सर्वजनोद्धा-
रायदयाद्रहिताः तत्सम्प्रदायाः प्रवर्तिताः तिष्ठन्तीयदि
ह्युद्भिस्तवोपिपूर्वोक्तायस्यमाणास्तु बहुविधाः तथाहि कमण्ड-
लुकाषायाम्बरकेशश्मश्रुजटाश्मश्र्वादियुक्ताः श्रीमत्संक-
राचार्य्यानुयायि भिक्षवः ॥ कमण्डलुश्वेताम्बरकषाया-
म्बरकरंगुरुकेशजटाश्मश्र्वादियुक्ता योगिभिक्षवः ॥ कम-
ण्डलुश्वेतकाषायमांजिष्ठाम्बरकेशजटाश्मश्र्वादियुक्ताः
श्रीगुरुनानकानुयाय्युदासीनभिक्षवः ॥ कमण्डलुश्वेतका-
षायमांजिष्ठाम्बर नियतकेशश्मश्र्वादियुक्ताः श्रीगुरुनान-
कीयानिर्मलभिक्षवः ॥ एवमन्येपितत्तत्सम्प्रदायसिद्धचिह्नै-
र्नविलक्षणावहवो महात्मानः सन्ति ॥ नन्वेवमप्येषु सम्प्रदा-
येषु सर्वजनेषु त्यागाद्यन्तरङ्गान्यपि सन्त्याश्रमाधनानि न ह-
श्यन्ते इति चेत्सत्यं । ब्राह्मणादिसर्ववर्णाश्रमेष्वपि चिह्ना-
नितत्तत्कर्म्माणि न दृश्यन्त एव ॥ दृश्यन्ते च कालानुसारेण य-
थायोग्यं पूर्वतन्त्रजन्मार्जितपुण्यवन्तु तत्तत्सर्ववर्णाश्रमिषु
यदिकेनचित्तु सत्कालस्याज्ञानप्रमादादिनात्रास्वधर्म्मः परि-
लुप्यते । तथैव तत्तत्सम्प्रदायेषु तत्कर्माचार्य्यप्रज्ञादोषः प्रस-
ज्यते । उक्तं च भगवता मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्ध-
ये इत्यादिना । नन्वेषां साधूनां चतुर्थाश्रमबोधकयतिसंन्या-
सिभिक्ष्वादिपदव्यपदेशः कुतः । तत्तद्बोधकप्रमाणादर्शनादि-
ति चेन्न एकदण्डी त्रिदण्डी वा शिखी वा मुण्डितो लघवेव वा । कषाय-
मात्रधारोपि यतिः पूज्यो युधिष्ठिरेत्यादिमहाभारते गौतम-
संहितायां चैकदण्डाद्युक्तचिह्नवतां सत्पुरुषाणां तथामात्रा-
पितराभ्यां च सामान्य चिह्नवतामपि सत्पुरुषाणां यतिपदा-
भिधेयताया भीधानाद्बोधनात् । वैराग्येणाभ्यासशीलानां

केशश्मश्रुजटाश्मश्र्वादियुक्ताः श्रीमद्भ्यानन्दानुयायिवैराग्यभिक्षवः ॥ कमण्डलुश्वेताम्बरकाषायाम्बर- शुभ्र

जितेन्द्रियाणांतन्नस्सम्यक्सम्यग्विहितचिह्नैर्लक्षयेयति
संन्यास्यादिपदार्थतांविचारेतथान्तरंगमोक्षसाधनविचा
रेचसर्वेषांसाम्यतासम्यक्सांख्यतथाहि ॥ दुःखेनोद्विग्नमनाःसुखे
निःस्पृहः त्यागोरागशुभाशुभयोरनभिस्नेहः न द्वेष्टि
नप्रमोदश्चसर्वेषामिन्द्रियाणांगतिरुपरमस्तत्रस्थितप्र
ज्ञः सहात्मन्येवात्मनिष्ठैवनिरित्यथर्ववेदेपरमहंसो
पनिषदियतिलक्षणम् एवंज्ञेयः सनित्यसंन्यासी योनद्वे
ष्टिनकांक्षति। निर्द्वन्द्वोहिमहाबाहो· सुखंबन्धात्प्रमु
च्यतेइति संन्यासिलक्षणम् योन्तः सुखोन्तरारामः
तथान्तर्ज्योतिरेवच । सयोगीब्रह्मनिर्वाणं· ब्रह्मभूतो·
धिगच्छतीतियोगिलक्षणम् एवंअनाश्रितः कर्मफ·
लं· कार्यंकर्मकरोतियः ससंन्यासीचयोगीचननिर
ग्निर्नचाक्रियः यंसंन्यासमितिप्राहुर्योगंतंविद्धिपाण्डवेति
मिलितंयोगिनांसंन्यासियोगिलक्षणम् ॥ एवंसूत्र
र्गाडोधृतोयेनसकर्हाडीसउच्यते इत्यथर्ववेदेप
रमहंसोपनिषदि एकदण्डित्व० एवं· वाग्दण्डः म
नोदण्डः कायदण्डस्तथैवच यस्यैतेनियताबु
द्धौ· त्रिदण्डीतिसउच्यते इति मनुस्मृतौ अ० १२ त्रि
दण्डित्व· एवं· यस्यस्मृतीयोनपारक्षोयस्यमित्रसमो
रिपुः ॥ तेवैष्णवाः क्षणादेवपापिनंपावयन्तिहि १
यस्यनामस्मृतापापराशिंदहतिसत्वरम् ॥ यदीयस्यपा
दपद्मेभक्तिर्यस्यसवैष्णवः ॥२॥ इत्यादिपाद्मेश्रीरामो
त्तरे· ल० ॥ एवं· अनिकेतः परिपतन् वृक्षमूला
श्रयोयतिः ॥ अयाचकः सदायोगी· त्यागीपात्रंभि
क्षुकर्हति ॥ अशोकमोहः समलोष्टकाञ्चनः ॥ महीरुह

मिस्रु
दंडन

स्व.ध.
६७

क्रोधो मत्सरमथितविग्रहः ॥ अथैतन्निरस्तुतिरभिप्रायः ॥
मनुस्मृतीनस्येयमित्युकदृति ॥ कमपाङ्गदृशमङ्गलानि· जुषे
लमसहायता ॥ उपेक्षासर्वभूतानां हितावह्निसुखस्यसणामिति
यमावतीकम् ॥ एवं· सपरमहंसआत्मस्तेननमस्कारो
मनवाकायैनस्तुतिर्नयपद्कार्योमवेङ्क्षुरिति ॥ नाचास्तं
नविसर्जनं न संश्चन ध्यानं नोपासितं च नलमिमास्तथैनम्।
थक्कना एथक्कनाहर्न भंगमिकेनस्थिरानिरीवमभिस्तुमिति
परमहंसोपनिषद्कं परमहंसमित्युक्तः एवं· क्रोधः क्षुद्र
जेयः शत्रुः लोभोव्याधिरनन्तकः ॥ सर्वभूतहितः साधुः अ
साधुर्निर्दयः स्मृतः इति भा· व· अ· ३१३। श्लो ९२ ॥
युधिष्ठिरोक्तं ॥ अक्रोधनाः सत्यपराः धर्मनित्या दमेरताः।
तादृशाः साधवो लोके तेभ्योनमोमहत्फलमित्यगीतोमसंहितो
क्तंच साधुत्व· एवं· अद्रोहः सर्वभूतेषु· कर्मणा मनसा गिरा।
अनुग्रहश्च दानंच सतां धर्मः सनातनः। यथायं लोकोयं
मनुष्याः शक्तिपेशलाः। सन्तस्त्वेवाप्यमित्रेषु· दयां प्राप्तेषु कु
र्वते इति भा· शो· अ· उक्तं सल्लल·। शक्तिपेशलाः शक्तिको
शलहीनाः ॥ एवं· सुशीलान्सदाचारनिरतान्विश्वान्। हरिं
सदासमंसेवमानान् स्वशास्त्रेषुरतान्स्वधर्मनिरतान्। उत्
सीन्साधून्नमस्येनमस्ये ॥ इत्युदासीनलक्षणम् ॥ एवं· ज्ञान
मात्मरत्नान्विवेकजलधौस्नातानपरे पावने ॥ नित्यंवेदविचार
तत्पधियोभावप्रियान्नित्यशः ॥ सत्सङ्गैकनिषेविणोः नवरं
धर्मार्हमीमांसये ॥ वन्देतान्नरपुङ्गवान्नहरहः साधून्सदानि
र्मलान ॥ येषामात्ममनोः मलंवपुरिदंवाह्यंतथानिर्मलम्। वा
संस्यमपानिर्मलानि। विमलंस्थानंतथैवात्मनः। ज्ञानं ध्यानमु
पासनादिकमिदंयेषांसदानिर्मलम्। वन्देतान्नरपुंगवान्नहरहः
साधून्सदानिर्मलानिति ॥

मेलल॰ अत्र सर्वेत्रादिपदेन तत्तत्संप्रदायसिद्धनाम भस्म
चन्दनतुलसीरुद्राक्षादीनां ग्रहणम्॥ एवमेव येन केन
चिदाच्छन्नो येन केन चिदाशितः यत्र क्वचन शायी च
तं देवा ब्राह्मणं विदुः॥ अहेरिव गणाद्भीतः सौहित्यान्नर
कादिव कुणपादिव च स्त्रीभ्यः तं देवा ब्राह्मणं विदुः॥
न क्रुध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः॥ स
र्वभूतेष्वभयदः तं देवा ब्राह्मणं विदुरित्यादि भा॰ मो॰ व्या
सोक्तब्राह्मणल॰ ब्रह्माध्ययनसंयुक्तो ब्रह्मचर्यरतस्त
था। सर्वं ब्रह्मेति यो वेद ब्रह्मचारी स उच्यते इति श्रीशंक
राचार्योक्तब्रह्मचारिल॰ स गृही यो गृहातीतः। श
रीरं गृहमुच्यते। गुणाः कुर्वन्ति कर्माणि नाहं कर्तेति बु
द्धिमानिति तेनोक्तगृहस्थल॰ किमुग्रैश्च तपोभिश्च यस्य ज्ञा
नमयं तपः। हर्षामर्षविनिर्मुक्तो वानप्रस्थः स उच्यते इति
तदुक्तं वानप्रस्थल॰ एवमन्येषामपि तत्तत्संप्रदायविधा
यकपदानामर्थविचारेणार्थैकतावसेयेति॥ एवं मोक्ष
साधनं वैराग्यविवेकशमदमध्यानप्राणायामजपा
दिकमपि सर्वेषां समानमेवेति न भेद इति॰ उक्तेषु च
त्स्वाश्रमस्य सर्वसंन्यासिषु वैराग्याद्यन्तरंगसाधनवा
त्त्वेनैवाश्रमित्वव्यवहारः उक्तं तत्स्वरूपवाच्यता व्यवहा
रश्च ननूक्तस्वस्वधर्मरहितानां पापात्मनां नरकेऽ
वृषमालेषोपजीविनाम्॰ तदुक्तं मनुना। दूषितोऽपि चरे
द्धर्मं यत्र तत्राश्रमे वसन्। समः सर्वेषु भूतेषु न लिङ्गं
धर्मकारणम्॥ १॥ फलं कतकवृक्षस्य यद्यप्यम्बुप्रसा
दकम्। न नामग्रहणादेव तस्य वारि प्रसीदति इति एवं
याज्ञवल्क्येनापि। नाश्रमः कारणं धर्मे क्रियमाणो भवे
द्धि सः। अतो यदात्मनोऽपथ्यं परेषां न तदाचरेदिति॰ ए
वं। काष्ठदण्डधृतो येन सर्वाशी ज्ञानवर्जितः। स या
॥ ति नरकान्॥ ॥

घोरान् महारौरवमेव चेत्यथर्ववेदीयपरमहंसोपनि
षदुक्तम्॰ एवं॰ त्रिदण्डधारणं मौनं जटाधारणमुण्ड
नम्। वल्कलाजिनसर्वांगो ब्रह्मचर्याभिषेचनम्।
अग्निहोत्रं वने वासः स्वाध्यायो ध्यानसंक्रिया। सर्वा
ण्येतानि वै मिथ्या यदि भावो न निर्मलः। न जातिः पूज्य
ते राजन् गुणाः कल्याणकारकाः चण्डालमपि वृत्तस्थं
तं देवा ब्राह्मणं विदुरिति गौतमसंहितायामुक्तम्॰ एवं
परिव्रजन्ति दानार्थं मुण्डाः काषायवाससः। सितव
हुविधैः पाशैः संचिन्वन्तो वृथामिषम्॥ त्रयीं च नाम व
र्तन्ते स्व स्वकार्यमन्नजल्पिते। त्रिविष्टब्धं च वासश्च
प्रतिगृह्णन्त्यबहुश्रुताः॥ अनिष्कषाये काषायं ईहार्थमि
ति विद्धितम्। धर्मध्वजानां मुण्डानां वृत्त्यर्थमिति मे म
तिः॥ काषायैरजिनैश्चीरैर्नग्नान्मुण्डान् जटाधरान्।
भृत्साधूरूपानित्यादि भा॰ ए॰ १८। ३२ उक्तम्॰ एवं म
नुना अ॰ ४॥ धर्मध्वजी सदालुब्धः छाद्मिको लोकदं
भकः। बैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसंधकः
॥१॥ अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः। शठो
मिथ्याविनीतश्च बकव्रतचरो द्विजः॥२॥ अतपास्त्व
नधीयानः। प्रतिग्रहरुचिर्द्विजः। अम्भस्यश्मप्लवे
नेव सह तेनैव मज्जति॥३॥ न वार्यपि प्रयच्छेत्तु वै
डालव्रतिके द्विजे न बकव्रतिके विप्रे नावेदविदि
धर्मवित्॥४॥ पाखण्डिनो विकर्मस्थान् बैडालव्र
तिकाञ्छठान्। हैतुकान् बकवृत्तींश्च वाङ्मात्रे
णापि नार्चयेत्॥५॥ ये बकव्रतिनो विप्राः ये च मार्जार
लिंगिनः। ते पतन्त्यन्धतामिस्रे तेन पापेन कर्मणा॥६॥
अलिंगी लिंगिवेषेण यो वृत्तिमुपजीवति। स लिंगिनां
हरत्येनः तिर्यग्योनौ च जायते॥७॥ इत्युक्तम्॰ एवं।
अव्रता ह्यनधीयाना यत्र भैक्ष्यचरा द्विजाः। तं ग्राम

दण्डयेद्राजा चौरमन्नमयो हि सः।१। राजभिर्धृतदण्डा
स्तु कृत्वा पापानि मानवाः। निर्मलाः स्वर्गमायान्ति सन्तः सु
कृतिनो यथा। २ इति वशिष्ठसंहितायामुक्तम् एवं·स्वा
त्मानं भिक्षुकं विन्द्यात्· न मौण्ड्यान्नच याचनात्। क्षु
द्रस्तु यो ऽर्थं त्यजति· नस्तु तं विद्धि भिक्षुकमिति भा·ए·
अ·१८ उक्तम्·एवं·ब्रह्मतत्वं न जानाति·ब्रह्मसूत्रेण ग
र्वितः। तेनैव सच पापेन। विप्रः पशुरुदाहृतः॥ किंपाही
नश्च धूर्तश्च·सर्वधर्मविवर्जितः। निर्दयः सर्वभूतेषु·
विप्रश्चाण्डाल उच्यते इत्यत्रिसंहितायामुक्तम्। एवं·प
रमारालस्याभ्यां स्वस्वधर्ममत्यजतानां नरकफलकमेव मा
ख्यापजीविनां ततदृषिप्रणीतधर्मसंहितायां। सर्वभक्ष
वहिष्कृति संमतैश्चकलौयुगे। नानुतिष्ठन्ति मेऽक्षेप शिक्षा
द्रं परायणादन्यादिष्वनौचबहूनि निन्दावचनानि सन्ती
ह विस्तरभियानोच्यते· इति निषिद्धाचारि निन्दा विशे
षः॥ अथ संन्यासिधर्माः। यस्मिन्वाचः प्रविशन्ति·कूपेत्र
स्ता मृगा इव। न वक्तारं पुनर्यान्ति·स कैवल्याश्रमे वसेदि
ति।१। तथा·अभयं सर्वभूतेभ्यो दत्वा यः प्रव्रजेद्द्विजः।
लोकास्तेजोमयास्तस्य प्रेत्य चानन्त्यमश्नुते।२। यदा

न कुरुते भावं·सर्वभूतेषु पापकम्। कर्मणा मनसा
वाचा·ब्रह्म संपद्यते तदा ३ यदा चायं न बिभेति यदा
चास्मान्न बिभ्यति। यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते
तदा ४ इति भारते मोक्षधर्मे अ· २६५ भीष्मवचनं। एवं
क्रुद्धः पापं नरः कुर्यात् क्रुद्धो हन्याद्गुरूनपि। क्रुद्धः परु
षया वाचा· श्रेयसोऽप्यवमन्यते।१। वाच्यावाच्यं हि कु
पितो न प्रजानाति कर्हिचित्। नाकार्यमस्ति क्रुद्धस्य·
नावाच्यं विद्यते तथा।२। हिंसा क्रोधादवध्यांस्तु वध्या
न्संपूजयीत च। आत्मानमपि च क्रुद्धः प्रेषयेद्यमसाद
नम्।३। एतान्दोषान्प्रपश्यद्भिः जितः क्रोधो मनीषिभिः।

प्र·प· ६८

दृत्कृद्भिः परमं श्रेयः इह चामुत्र चोत्तमम्।५। विहं
स्तथैव यः शक्तः क्लिश्यमानो न कुप्यति। अनाशयित्वा
ऽनेष्टारं परलोके च नन्दति।६। सन्नत्र यं प्रबलेणेह सर्वा
पत्सु शोभने। क्षमावतो हि भूतानां जन्म चैव प्रकीर्ति
तम्।६। आक्रुष्टस्ताडितः क्रुद्धः क्षमते यो बलीयसा। य
श्च नित्यं जितक्रोधः विद्वानुत्तमपूरुषः।७। प्रभाववान
पि नरः तस्य लोकाः सनातनाः। क्रोधनस्त्वल्पविज्ञा
नः प्रेत्य चेह च नश्यति।८। क्षमा धर्मः क्षमा यज्ञः क्षमा
वेदाः क्षमा श्रुतम्। य एतदेवं जानाति स सर्वं क्षन्तुमर्ह
ति।९। क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च। क्ष
मा तपः क्षमा शौचं क्षमयेदं धृतं जगत्।१०। अति यज्ञ
विदां लोकान् क्षमिणः प्राप्नुवन्ति च। अति ब्रह्मवि
दां लोकान् अति चापि तपस्विनाम्।११। अन्ये वै य
जुषां लोकाः कर्मिणामपरे तथा। क्षमावतां ब्रह्मलोके
लोकाः परमपूजिताः।१२। क्षमा तेजस्विनां तेजः क्षमा
ब्रह्म तपस्विनाम्। क्षमा सत्यं सत्यवतां क्षमा यज्ञः क्ष
मा शमः।१३। तां क्षमां तादृशीं कृष्णे कथमस्मद्विधस्त्य
जेत्। यस्यां ब्रह्म च सत्यं च यज्ञा लोकाश्च धिष्ठिताः।१४
क्षन्तव्यमेव सततं पुरुषेण विजानता। यदा हि क्षमते
सर्वं ब्रह्म संपद्यते तदा।१५। क्षमावतामयं लोकः पर
श्चैव क्षमावताम्। इह सन्मानमृच्छन्ति परत्र च शुभां
गतिम्।१६। येषां मन्युर्मनुष्याणां क्षमया निहतः सदा।
तेषां परतरे लोकास्तस्मात्क्षान्तिः परा मता।१७। इत्या
दि वनपर्वभारते अ॰ २९ युधिष्ठिरवचनम्॥ अभय
स्माह सर्वभूतानां हिजान्नोस्य द्यंत भयं। तस्य देहा
द्विमुक्तस्य भयं नास्ति कुतश्चन।१। अनभिरतिके
तः स्यात् ग्राममन्नार्थमाश्रयेत्। उपेक्षको ऽसंकु
सुको मुनिर्भावसमाहितः।२। कपालं वृक्षमूलानि क
स्थिरमति॰

चैत्यमसहायवान्।समुनाचैवसर्वस्मिन् एनस्त्रकस्य
लक्षणमाथ।नाभिनन्देतमरणंनाभिनन्देतजीवितम्।
कालमेवप्रतीक्षेत·निर्देशंभृतकोयथा।४।दृष्टिपूतंन्य
सेत्पादं·वस्त्रपूतंजलंपिबेत्।सत्यपूतांवदेद्वाचं·मनःपू
तंसमाचरेत्।५।अतिवादांस्तितिक्षेतनावमन्येतकंचन
।नचेमंदेहमाश्रित्य·वैरंकुर्वीतकेनचित्६।यस्यवा
ङ्मनसीशुद्धे·सम्यग्गुप्तेचसर्वदा।सवैसर्वमवाप्नो
ति·वेदान्तोपगतंफलम्।७।नारुंतुदःस्यादार्तोपि·
नपरद्रोहकर्मधीः।यया।ऽस्योद्विजतेवाचा·नालोक्यां
तामुदीरयेत्।८।संमानाद्ब्राह्मणोनित्यमुद्विजेतविषा
दिव।अमृतस्येवचाकांक्षेत्·अपमानंतुसर्वदा।९।
अ·४।नसीदन्नपिधर्मेण·मनोऽधर्मेनिवेशयेत्।अ
धार्मिकाणांपापानां·आशुपश्यन्विपर्ययम्।१०।न
पाणिपादचपलो ननेत्रचपलोऽनृजुः।नस्याद्वाक्च
पलश्चैव·नपरद्रोहकर्मधीः।११।अ·१२वेदाभ्यास
तपोज्ञानं·इन्द्रियाणांचनिग्रहः।अहिंसागुरुसेवाच·
निःश्रेयसकरंपरम्।।१२।।सर्वभूतेषुचात्मानं·सर्वभू
तानिचात्मनि।समंपश्यन्नात्मयाजी·स्वाराज्यमधिग
च्छति।१३।अ·६।धृतिःक्षमादमोस्तेयं·शौचमिन्द्रिय
निग्रहः।धीर्विद्यासत्यमक्रोधो·दशकंधर्मलक्षणम्
१४ चतुर्भिरपिचैवैतैः नित्यमाश्रमिभिर्द्विजैः।दशल
क्षणकोधर्मःसेवितव्यःप्रयत्नतः।१५।अ·१२वेदशा
स्त्रार्थतत्त्वज्ञो यत्रतत्राश्रमेवसन्।इहैवलोकेतिष्ठ
न्स·ब्रह्मभूयायकल्पते।१६।एवंसंन्यस्यकर्माणि·स्व
कार्यपरमोऽस्पृहः।संन्यासेनापहत्यैनःप्राप्नोतिपर
मांगतिम्।मितैत्तइध्यायेमत्रयवचनम् अग्रहुत्वेष्टिंवि
धिवत्सम्यक्सर्ववेदसदक्षिणाम्।आत्मन्यग्नीन्समा
रोप्यद्विजोब्रह्माश्रमीभवेत्।।१।। वि।। ।।

धूमेन्यस्तमुसले व्यंगारे भुक्तवज्जने। अतीतपात्रसंपा
ते नित्यं भिक्षां यतिश्चरेत्।३। न व्यथेत तथाऽलाभे यथाल
ब्धेन वर्त्तयेत्। न याचयेत्तथैवान्नं नाश्नीयात्कस्यचिद्गृहे।४।
कौपीनाच्छादनं वासो विभृयादसरवश्चरन्। शून्यागारनि
केतः स्याद्यत्रसायंगृहो मुनिः।५। दृष्टिपूतं न्यसेत्पादं वस्त्र
पूतं जलं पिबेत्। सत्यपूतं वदेद्वाचं मनःपूतं समाचरेत्।
श्चन्दनैर्लिप्यते ऽङ्गं वा भस्मचूर्णैर्विगर्हितैः। कल्या
णमकल्याणं तयोरेव न संश्रयेत्।६। सर्वभूतहितो
मैत्रः समलोष्टाश्मकाञ्चनः। ध्यानयोगरतो नित्यं भि
क्षुर्यायात्परां गतिं।७। मितिशंखसंहिता अथ परिव्रा
जकः सर्वभूताभयदक्षिणां दत्वाप्रतिष्ठेत्।। संन्यसेत्स
र्वकर्माणि वेदमेकं न संन्यसेत्। वेदसंन्यासतः शूद्रः त
स्माद्वेदं न संन्यसेत्। एकाक्षरं परं ब्रह्म प्राणायामः परं
तपः। उपवासात्परं भैक्ष्यं दया दानाद्विशिष्यते। सप्तागा
राण्यसंकल्पितानि चरेद्भैक्षम्। एकशाटीपरिवृतो
ऽजिनेन वा गोप्रलूनैस्तृणैर्वेष्टितशरीरः। ब्राह्मणकुले
वा यल्लभेत्तद्भुञ्जीत सायंप्रातर्मधुमांससर्पिर्वर्जनम्।
स्थण्डिलशाय्य नित्यां वसतिं वसेत्। ग्रामान्ते देवगृ
हे शून्यागारे वृक्षमूले वा। अरण्यनित्यो ज्ञानस्वाध्या
यशून्यो नासंदर्शने विहरेत्। मनसा ज्ञानमधीयानः अ
व्यक्तलिंगोऽव्यक्ताचारोऽनुन्मत्त उन्मत्तवेषो विचरेत्।
न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया। नानुशास
नवादाभ्यां भिक्षां लिप्सेत कर्हिचित्। अलाभेन विषी
दस्यात् लाभे चैव न हर्षयेत्। प्राणयात्रिकमात्रः स्यान्मा
त्रासंगाद्विनिर्गतः। नकुर्यान्नोदके सङ्गं न चैलेन त्रिपु
ष्करे नागारे नासने मनः कुर्यात्।। ग्रामे वा वसेदजिह्मोऽश
रणोऽसंकुसुकः। यतीन्साधून्वा गृहस्थान्सायंप्रातश्चल
येत्। नचेन्द्रियसंयोगं कुर्वीत केनचित्। उपसक्तः सर्वभू

तानी हिंसानुग्रहपरिहारेण। पैशुन्यमत्सराभिमानाहं
कारादिरहितः। सर्वाश्रमिणां धर्मिष्ठो यज्ञोपवीतसुर
कमण्डलुहस्तः शुचिः। वृषलान्नपानवर्जी यति नैही
यनेब्रह्मलोकादिति वशिष्ठसंहितासारः। अत्र लोको
वशीकृतो येन येन चात्मा वशीकृतः। इन्द्रियार्थो जितो
येन तं योगं प्रब्रवीम्यहम्। १। प्राणायामस्तथा ध्यानं प्र
त्याहारस्तु धारणा। तर्कश्चैव समाधिश्च षडङ्गो योग
उच्यते। २। नारण्यसेवनाद्योगो नानेकग्रन्थचिन्तनात्
। व्रतैर्यज्ञैस्तपोभिश्च न योगः कस्यचिद्भवेत्। ३। न प
द्मासनाद्योगो न नासाग्रनिरीक्षणात्। न च शास्त्राति
रिक्तेन शौचेन सम्भवेत्क्वचित्। ४। न मौनमन्त्रकुहकै र
नेकैः सुकृतैस्तथा। लोकयात्राभियुक्तस्य योगो भवति
कस्यचित्। ५। अभियोगात्तथाभ्यासात्तस्मिन्नेव तु नि
श्चयात्। पुनः पुनश्च निर्वेदाद्योगः सिध्यति नान्यथा। ६।
आत्मचिन्ताविनोदेन शौचक्रीडनकेन च। सर्वभूतस
मत्वेन योगः सिध्यति नान्यथा। ७। युक्तो पि योगयुक्तः
स्याज्जाग्रत्स्वापि विशेषतः। इदं कृत्येहः स्मृतः श्रेष्ठो योग
रिष्ठो ब्रह्मवादिनाम्। ८। य आत्मव्यतिरेकेण द्वितीयं
नैव पश्यति। ब्रह्मीभूयः स एवं हि दक्षपक्ष उदाहृतः
। ९। विषयासक्तचित्तो हि यतिर्मोक्षं न विन्दति। यत्ने
न विषयासक्तिं तस्माद्योगी विवर्जयेत्। १०। वृत्तिही
नं मनः कृत्वा क्षेत्रज्ञं परमात्मनि। एकीकृत्य विमुच्य
ते योगो यं मुख्य उच्यते। ११। कषायमोहविक्षेपलज्जा
शंकादिचेतसः। व्यापारास्तु समाख्याताः तान् जित्वा
वशमानयेत्। १२। बलेन परराष्ट्राणि गृह्णन् शूरस्तु
नोच्यते। जितो येनेन्द्रियग्रामः स शूरः कथ्यते बुधैः। १३।
बहिर्मुखानि सर्वाणि कृत्वा चाभिमुखानि वै। सर्वे चै
वेन्द्रियग्रामं मनश्चात्मनि योजयेत्। १४। सर्वभावि

ब्र·प·
७२

निर्मुक्तः सतत्रैव ब्रह्मणि न्यसेत्। एतज्ज्ञानञ्च योगश्च शे
षाः स्युर्ग्रन्थविस्तराः।१५। त्यक्त्वा विषयभोगांश्च मनो नि
श्चलतां गतम्। आत्मशक्तिस्वरूपेण समाधिः परिकी
र्तितः।१६। स्वसंवेद्यं हि तद्ब्रह्म कुमारीमैथुनं यथा। अयो
गी नैव जानाति जात्यन्धो हि यथा घटम्।१७। सत्त्वोत्कटाः सु
राश्चापि विषयेण वशीकृताः। प्रमादिभिः क्षुद्रसत्त्वैर्मानु
षैरत्र का कथा।१८। तस्मात्त्यक्तकषायेण कर्तव्यं दण्डधा
रणम्। इतरस्तु न शक्नोति विषयैरभिभूयते।१९। नास्थि
रं क्षणमप्येकमुदकं हि यथोर्मिभिः। वातहतं तथा चित्तं त
स्मात्तस्य न विश्वसेत्।२०। त्रिदण्डव्यपदेशेन जीवन्ति
बहवो नराः। यो हि ब्रह्म न जानाति न त्रिदण्डार्हः एव
सः।२१। ब्रह्मचर्यं सदा रक्षेदष्टधा मैथुनं पृथक्। स्मर
णं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्।२२। संकल्पोऽध्य
वसायश्च क्रियानिर्वृत्तिरेव च। एतन्मैथुनमष्टाङ्गं प्र
वदन्ति मनीषिणः।२३। न ध्यातव्यं न वक्तव्यं न कर्तव्यं
कदाचन। एतैः सर्वैः सुसम्पन्नो यतिर्भवति नेतरः।
२४। पारिव्रज्यं गृहीत्वा च यो धर्मे नावतिष्ठते। श्वपदे
नाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत्।२५। एको भिक्षु
र्यथोक्तस्तु द्वौ चैव मिथुनं स्मृतम्। त्रयो ग्रामः समाख्या
त ऊर्ध्वं तु नगरायते।२६। नगरं हि न कर्तव्यं ग्रामो वा मि
थुनं तथा। एतत्त्रयं प्रकुर्वाणः स्वधर्माच्च्यवते यतिः॥२७।
राजवार्तादि तेषां तु भिक्षावार्ता परस्परम्। स्नेहपैशुन्य
मात्सर्यं सन्निकर्षादसंशयम्।२८। लाभपूजानिमित्तं
हि व्याख्यानं शिष्यसंग्रहः। एते चान्ये च बहवः प्रपंचाः
कुतपस्विनाम्।२९। ध्यानं शौचं तथा भिक्षा नित्यमेका
न्तशीलता। भिक्षोश्चत्वारि कर्माणि पञ्चमो नोपपद्य
ते।३०। कृतयो जपैः कृशीभूतो व्याधितोऽवसंत्यावहः
।वृद्धो ग्रहगृहीतश्च यश्चान्यो विकलेन्द्रियः॥ ॥

॥३१॥ व०॥ मौनरूजत्यशुवाचैव भिक्षुर्योवसथावहः। सद्
यथालिप्तस्त्वान्नतु घ्नन्तीइयमालिचा। ३२॥ निरूजत्यशुवाचे
वत्नस्नचर्यादि नु श्यन्ति। ब्रह्मचर्यं हिन वेत्तु कुलं चैव तु नाशयेत्
३३॥ वसन्नावसथे भिक्षुर्मैथुनं यदि सेवते। तस्यावसथनाथस्य
मूलान्यपिनिकृन्तति॥३४॥ आश्रमे तु यतिर्यस्य मुहूर्तमपिवि
श्रमेत्। किं तस्यान्येन धर्मेण कृतकृत्योभिजायते॥३५॥ संचि
तं यद्गृहस्थेन पापमामरणान्तिकम्। स निर्दहति तत्सर्व
मेकरात्रोषितो यतिः॥३६॥ योगाश्रमपरिश्रान्तं यस्तु भोजय
ते यतिम्। निखिलं भोजितं तेन त्रैलोक्यं सचराचरम्॥३७॥
यस्मिन्देशे वसेद्योगी ध्यानयोगविचक्षणः। सोपि देशो भ
वत्पूतः किं पुनस्तस्य बान्धवाः॥३८॥ द्वैतञ्चैव तथाद्वैतं द्वैता
द्वैतं तथैव च। न द्वैतं नापि चाद्वैतमित्येतत्पारमार्थिकम्॥३९
॥ नाहं नैवान्यसम्बन्धो ब्रह्मभावेन भावितः। ईदृशायामव
स्थायामवाप्यं परमं पदम्॥४०॥ मिति दक्षसंहिता॥ अत्र चतु
र्भेदः परिव्राट् स्यात् कुटीचरबहूदकौ। हंसः परमहंसश्चवक्ष्य
न्तेतेपृथक पृथक॥१॥ पुत्रस्य भ्रातृपुत्रस्य भ्रातृर्वा हित्र
श्रोऽपि। तद्गृहान्तकुटीस्थो यः सभैक्ष्यवृत्तिर्भुद्विजः॥२॥ त्रि
कालार्थ्यकृतः सोपि योवासः पूतवारिपः। कन्थात्रिदण्डभृ
त्कान्तश्चात्मज्ञः सकुटीचरः॥३॥ स्नेयोबहूदकोनामयः पवि
त्रपादुकः। शिखासनोपवीतानि धातुकाषायवस्त्रभृत्॥
४॥ साधुवृत्तिद्विजेभ्यस्तु भिक्षाभागात्मचिन्तकः। बहूदक
स्त्वयं ज्ञेयोयः परिव्राट् त्रिदण्डभृत्॥५॥ एकदण्डधरा हं
साः शिखोपवीतधारिणः। वाच्याचारकराः शान्ता भूता
नामभयप्रदाः॥६॥ वसन्त्येकक्षपां ग्रामे नगरे पंचशर्वरीः
कर्षयन्तोऽत्र देहमात्मध्यानरताः सदा॥७॥ एकदण्डध
राः मुण्डाः कन्थाकौपीनवाससः। अव्यक्तलिंगिनोऽव्यक्ताः
सर्वद्वैवचमौनिनः॥८॥ शिखादिरहिताः शान्ता उन्मत्तवे
षधारिणः। भग्नशून्यासनैकस्तुवासिनोब्रह्मचिन्तकाः॥

९॥ एते परमहंसा वै नैष्ठिकाश्च भिक्षवः। उक्तास्तद्गतभेदज्ञै
रात्मनः प्रार्थनाकराः॥१०॥ इति पराशरसंहितायां संन्यासि
विभागः॥ अत्र शौचमाश्रमसम्बन्धं यतिधर्मान् प्रशि
क्षयेत्। अहिंसा सत्यमस्तेयं ब्रह्मचर्यमफल्गुता॥१॥ दयां
च सर्वभूतेषु नियमेन यतिश्चरेत्। ग्रामान्ते वृक्षमूले च नित्य
कालनिकेतनः॥२॥ पर्यटेत्कीटवद्भूमिं वर्षास्वेकत्र संविशे
त्। वृद्धानामातुराणां च भीरूणां संगवर्जितः॥३॥ ग्रामे वापि
पुरे वापि वासो नैकत्र दुष्यति। कौपीनाच्छादनं वासः कन्थां
शीतापहारिणीम्।४॥ पादुके चापि गृह्णीयात् कुर्यान्नान्य
स्य संग्रहं। संभाषणं सह स्त्रीभिः आलम्भप्रेक्षणे तथा॥५॥ ए
काकी विचरेन्नित्यं त्यक्त्वा सर्वपरिग्रहं। याचितायाचिताभ्यां तु
भिक्षया कल्पयेत्स्थितिम्।६॥ साधुकारं याचितं स्यात् प्राक्
प्रणीतमयाचितम्। नान्यस्य गेहे भुञ्जीत० भुञ्जानो दोष
भाग्भवेत्॥७॥ त्यादि विष्णुस्मृतिः॥ अत्रैवं न चोत्पातनि
मित्ताभ्यां न च नक्षत्राङ्गविद्यया। नानुशासनवादाभ्यां भि
क्षां लिप्सेत कर्हिचित्॥१॥ अलाभेन विषादी स्याल्लाभे
न प्रहर्षयेत्। प्राणयात्रिकमात्रः स्यान्मात्रासंगाद्विनिर्ग
तः॥२॥ एककालं चरेद्भैक्षं न प्रसज्जेत विस्तरे। भैक्षप्रसक्तो
हि यतिः विषयेष्वपि सज्जति॥३॥ अल्पान्नाभ्यवहारेण
रहः स्थानासनेन च। ह्रियमाणानि विषयैः इन्द्रियाणि नि
निवर्तयेत्॥४॥ इन्द्रियाणां निरोधेन रागद्वेषक्षयेन च अ
हिंसया च भूतानाम् अमृतत्वाय कल्पते॥५॥ भैक्षेण वर्तये
न्नित्यं नैकान्नादी भवेद्यती। भैक्षेण व्रतिनो वृत्तिः उपवा
ससमाः स्मृताः॥६॥ न भोजनार्थं स्वे विप्रः कुलगोत्रे निवेदये
त्। भोजनार्थं हि ते शंसन् वान्ताशीत्युच्यते बुधैः॥७॥ अहृ
ताभ्युद्यतां भिक्षां पुरस्तादप्रचोदिताम्। मेने प्रजापतिर्ग्राह्यां
अपि दुष्कृतकर्मणः॥८॥ नाश्नन्ति पितरस्तस्य दशवर्षाणि
पंच च। न च हव्यं वहत्यग्निः यस्तामभ्यवमन्यते॥९॥ इत्या

रिमनुसंहिता अत्र·चोत्सघुकरींवृत्तिं अपि म्लेच्छकु
लादपि। एकान्नं नैव भोक्तव्यं बृहस्पतिसमायदीत्यत्रि
स्मृतिः॥ ॥ एवं·अपिदुष्कृतकर्मभ्यः समायातमयाचितम्
पतितेभ्यस्तदातेभ्यः प्रतिग्राह्यमसंशयम्॥ अन्तःप्रतिग्रही
तुं योवदद्वृत्तः सुसंवृत्तः। दीयमानं न गृह्णाति स्वर्गस्तस्या
ल्पकं फलमिति॥ भिक्षाव्रतं द्विजातीनामुपवाससमस्मृत
मिति·सोमपानसमाभिक्षेति च·भिक्षयायस्तु भुञ्जीत नि
राहारः स उच्यते इति च तत्र तत्र पराशरसंहिता। एवं·अप्र
मत्तश्चरेद्भैक्षं·सायाह्नेऽनभिलक्षितः। रहिते भिक्षुकैर्ग्रा
मे·यात्रामात्रमलोलुप इति याज्ञवल्क्यः एवं·अष्टौ भि
क्षा समादाय·समुनिः सप्तपंच वा। अद्भिः प्रक्षालिताः सर्वाः
ततोऽश्नीयाच्च वाग्यत इति संवर्तः एवं सप्तागारायसं
कल्पितानि चरेद्भैक्षमिति॥ ब्राह्मणास्य कुले यावल्लभेतत्त
द्भुञ्जीत सायंप्रातर्मांसवर्ज्जमिति च वसिष्ठः॥ अत्र·भिक्षा
र्थं ग्राममाश्रयेत् न पुनः सुखवासार्थम् वर्षाकाले तु न
दोषः॥ ऊर्ध्वं वार्षिकाभ्यां मासाभ्यां नैकस्थानवासी
ति शंखस्मृतेः॥ अशक्तौ पुनर्मासचतुष्टयपर्यन्तमपि
स्थातव्यम्॥ न चिरमेकत्र वसेत्। अन्यत्र वर्षाकालात्॥
आवणादयश्चत्वारो मासा वर्षाकाल इति देवलस्मृतेः
॥ एवं·एकरात्रं वसेत् ग्रामे नगरे पंचरात्रकम्। वर्षाभ्यो
न्यत्र वर्षासु मासांश्च चतुरो वसेदिति करावस्मृतेः॥ ए
वं·ग्रामे वापि पुरे वापि वासो नैकत्र दुष्यतीत्यादि पूर्वोक्त
तत्तद्विषावादिस्मृतेश्चेति अत्र ब्रह्मचर्यवानप्रस्थस
न्यासाश्रमविहितानां तत्तद्दृष्युक्तानन्तभिक्षादिवच
नानां युगभेदरोगीवृद्धयुवाद्यधिकारिभेदविवक्षया
व्यवस्थाज्ञेया। अत्र·यत्स्वाश्रमयोग्यमयाचितप्रासं
चतदेवग्राह्यं न तु यत्त्ययोग्यं मांससुवर्णादिकम पीति
।एवं·अजिह्वः षण्डकः पंगु अन्धो वधिर एव च मुग्ध

श्रमुच्यते भिक्षुः षड्भिरेतैर्न संशयः। १॥ इदमिष्टमिदं नेति
योऽश्नन्नपि न सज्जते। हितं सत्यं प्रियं वक्ति तमजिह्वं प्र
चक्षते। २। आद्यजातां यथा नारीं तथा षोडशवार्षिकीं।
शतवर्षां च यो दृष्ट्वा निर्विकारः स षण्ढकः। ३। भिक्षार्थं
मटनं यस्य विण्मूत्रकरणाय च। योजनान्न परं याति स
र्वथा स पङ्गुरेव सः। ४। तिष्ठतो व्रजतो वापि यस्य चक्षुर्न
दूरगम्। चतुर्युगं भुवं हित्वा परिव्राट् सोऽन्ध उच्यते। ५।
हितं मितं मनोहारि वचः शोकावहं च यत्। श्रुत्वापि यो न
शृणोति बधिरः स प्रकीर्तितः। ६। सान्निध्ये विषयाणां
च समर्थोऽविकलेन्द्रियः। सुप्तवद्वर्तते नित्यं स भिक्षुर्मु
ग्ध उच्यते। ७। इति संन्यासिधर्मविचारः॥ ब्रह्मचर्या
न्संन्यासान्ता आश्रमा यथा पुण्यजनकाः तथा संन्या
साद्ब्रह्मचर्यान्ताः विपरीताः पापजनका इति॥ ब्रह्मचारी
गृहस्थश्च वानप्रस्थो यतिस्तथा। उत्तमां वृत्तिमाश्रित्य
पुनरावर्तयेद्यदि। आरूढपतितो ज्ञेयः सर्वधर्मबहि
ष्कृतः। १। निन्द्यश्च सर्वदेवानां पितॄणां च तथोच्यते
। त्रिदण्डलिङ्गमाश्रित्य जीवन्ति बहवो द्विजाः। २।
न तेषामपवर्गोऽस्ति लिङ्गमात्रोपजीविनाम्। त्यक्त्वा लो
कांश्च वेदांश्च विषयानिन्द्रियाणि च। ३। आत्मन्येव
स्थितो यस्तु प्राप्नोति परमं पदमिति विष्णुस्मृतेः॥ एवं
यो गृहाश्रममादाय ब्रह्मचारी भवेत्पुनः। न यतिर्न वनं
स्थश्च सर्वाश्रमविवर्जित इति दक्षस्मृतेः॥ एवं सं
न्यस्य दुर्मतिः कश्चित् अपत्यार्थं स्त्रियं व्रजेत्। स कुर्या
त्कृच्छ्रमश्रान्तः षण्मासांस्तदनन्तरम्। इति। संन्यस्य दु
र्मतिः कश्चित् प्रत्यापत्तिं व्रजेद्यदि। स कुर्यात्कृच्छ्रम
श्रान्तः षण्मासात्प्रत्यनन्तरम्। इति संवर्तस्मृतेः॥ प्रत्या
पत्तिः पुनर्गार्हस्थ्यमिति॥ एवं यः प्रत्यवसितो विप्रः
प्रव्रज्यातो विनिर्गतः। अनाशकनिवृत्तश्च गार्हस्थ्यं

चेष्टि कीर्तिनि ॥ सत्वरे ज्ञी णि कृच्छ्राणि चीर्णि चान्द्राय
णानि च। जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयादि
ति पराशरस्मृतेः॥ एवं यस्तु प्रव्रजितो भूत्वा यदि। सेवेत मै
थुनम्। षष्टिं वर्षसहस्राणि विष्ठायां जायते कृमिरिति व
हन्नसिंहस्मृतेः॥ एवं शंखचक्राङ्कितो भूत्वा पुनर्मैथु
नमाचरेत्। षष्टि वर्षसहस्राणि विष्ठायां जायते कृमि
रित्याश्वलायनस्मृतेः॥ एवं न मैथुने न च मौनेन मूत्या गा
राश्रमेणाच। योगी सिद्धिमवाप्नोति यथा मैथुनवर्जना
दिति शङ्खसंहितावचनाच्चेति॥ अथ भिक्षुप्रशंसा। प्र
सिद्धः परमोहंसः साक्षान्नारायणः स्मृतः। यस्तं तं पूज
येन्नित्यं विष्णुस्तेन प्रपूजितः। १। यतिरूपेण सर्वत्र वि
ष्णुः पर्यटते महिम्। भक्तानामनुकम्पायै महर्द्धिमिविवृ
द्धये। २। द्वे रूपे वासुदेवस्य चलं चाचलमेव च। चलं संन्या
सिनां रूपं अचलं प्रतिमादिकम्। ३। अतो यतीनामच्यु
तगोत्रतां त्र॥ माता च कमला देवी पिता देवो जनार्दनः।
बान्धवा विष्णुभक्ताश्च स्वदेशो भुवनत्रयम्।४। लस्मा दृ
हस्थस्य नान्यद्दैवतमस्ति वै। अतोऽतिथिं नरव्याघ्र मं
नसैतद्धि चास्य। ५। अतिथिः पूजितो यद्धि ध्यायते मन
सा शुभम्। न तत्क्रतुशतेनापि तुल्यमाहुर्मनीषिणः। ६।
अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति। नान्यस्तस्मा
त्परो धर्मः इति प्राहुर्मनीषिणः। ७। चक्षुर्दद्यान्मनो द
द्यात् वाचं दद्याच्च सूनृताम्। अनुव्रजेदुपासीत स यज्ञः
पंचदक्षिणः। ८। पाद्यमासनमेवाथ दीपमन्नं प्रतिश्रयं।
दद्यादतिथिपूजार्थं स यज्ञः पंचदक्षिणः। ९। पात्रं त्व
तिथिमासाद्य शीलाढ्यं योन पूजयेत्। स दत्वा दुष्कृतं त
स्मै पुण्यमादाय गच्छति। १०। यस्मिन्देशे भवेद्योगी
ध्यानयोगविचक्षणः। सोपि देशो भवेत्पूतः किं पुनर्यस्य
बान्धवः। ११। संन्यासीनां द्विजं दृष्ट्वा स्थानाच्चलति भास्क

रः। एवमेमंडलं भित्वा॰ परं ब्रह्माधिगच्छति। १२। यस्य संन्यसनादेव॰ स्थानाच्चलति भास्करः। कुलं कोटि शतैः सार्धं प्राप्नोति परमं पदम्। १३। दिव्यतेजोमयः श्रीमान् सूर्य्यचन्द्राग्निमण्डलम्। भित्वा प्रयाति संन्यासी॰ स्वधर्मं परिपालनात्। १४। शतंकुलानां प्रथमं बभूव तथापराणां त्रिशतं समग्रम्। एते भवन्ति सुकृतस्य लोके॰ येषां कुले संन्यसतीह विद्वान्। १५। इति भारते। एवं॰ सर्वेषामाश्रमाणान्तु॰ संन्यासी ह्युत्तमाश्रमी। सर्ववान्ननमस्कार्य्यो॰ भक्त्या सन्माननवर्त्तिभिरिति हारीतस्मृतौ॰ एवं॰ गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः। पतिरेको गुरुः स्त्रीणां सर्वेषामतिथिर्गुरुरिति पाराशरादिस्मृतौ च श्रूयते॥ एवं॰ त्रिंशत्यरान् त्रिंशदपरान्॰ त्रिंशच्च परतः परान्। सद्यः संन्यसनादेव नरकात्तारयेत्पितृनिति दक्षः॥ एवं॰ ब्रह्मचारि सहस्रंच॰ वानप्रस्थ शतानिच। ब्राह्मणानां तु कोट्यस्तु॰ यतिरेको विशिष्यते। १। विष्णुलिंगाश्रितं द्विजं॰ दृष्ट्वा येच नराधमाः। स्थिताशय्यासने याने॰ न त्यजन्ति विमोहिताः। २। सदाचारपरिभ्रष्टा॰ ते पापा यान्त्यधोगतिम्॥ अत्र॰ आसनं शयनं यानं॰ पतिं दृष्ट्वा न संत्यजेत्। स्मृतोपि हि दुष्टात्मा॰ श्वयोनावभिजायते। ३। दुर्वृत्ते वा सुवृत्ते वा॰ यतिनिन्दां न कारयेत। यतीन्वै दूष्यमाणास्तु॰ नरकं यान्ति दारुणम्। ४। यतिहस्तगतं द्रव्यं गृहीत्वा यान्ति ता नतीयदि। अधः समीयते मूढः कुलानामेकविंशतिः। ५। रितिजाबालः॥ एवं॰ सर्वेषामपराधानां॰ यतिनिन्दा गरीयसी। यतिर्नारायणः साक्षात्॰ तस्मात्तां परिवर्जयेदिति हारीतः। एवं॰ नह्यम्मयानि तीर्थानि नदेवा मृच्छिलामयाः। ते पुनन्त्युरुकालेन दर्शनादेव साधवइति। एवं॰ अग्निचित्कपिलासत्री॰ राजा भिक्षुर्महोदधिः दृष्टमात्राः पुनंत्येते॰ तस्मात्पश्येत नि

न्यशः॥ येनमन्ति यतिं दूरात्॰ दृष्ट्वा काषायवाससम्। राजसुयफ
लावाप्तिः॰ तेषां भवति पुत्रक ।पदाकास्यते स्नानं॰ यती
नां पो द्विजोत्तमः। स्नानजंल भते पुण्यं॰ गंगायाः शतवार्षिक
म्॥ गोयूथस्य सहस्रस्य॰ फलं प्राप्नोति मानवः। कौपीनाच्छा
दनं पात्रं॰ भिक्षुकेयः प्रयच्छतीति भारते भीष्मः॥ यति योगि
ब्रह्मचारी॰ शतायुः सत्यवाक्तताम्। सचीवदा न्यः शूर
श्च॰ मृताः शुद्ध्यन्ति ते सदा॥ एवं॰ संन्यासेनमृतायेवै॰ प्रधनेयं
तनुंत्यजः। मुक्ति भाज न कालेवेते॰ इति वेदानि दर्शनम्॥
सद्यः शौचं विधातव्यं॰ शुचिरेवं विधीयते। नोच्यं ते तेमृता लोके
सद्योब्रह्मवपुर्गमा इति पराशरसंहिता। एवं॰ ब्रह्मनिष्ठे च सं
न्यस्ते॰ पितरि परते श्रुते। सपिण्डकरणं नैव॰ नाशौचं नैव च
क्रिया। १। अहन्येकादशी प्राप्ते॰ पार्वणं तु विधीयते। सपि
ण्डीकरणं नैव॰ कर्त्तव्यं तु सुतादिभिः॥ २॥ सद्यः संन्यसना
देव॰ प्रेतत्वं नैव जायते। एकोद्दिष्टं न कर्तव्यं॰ संन्यस्तानां क
दाचन। इति बौधायनः॥ एवं ब्रह्मीभूते च संन्यस्ते॰ ताते
च निधनं गते। न तस्य सूतकं कार्यं॰ न च पिण्डोदक क्रिया।
१। एकोद्दिष्टं जलं पिण्डं नाशौचं प्रेत संक्रियाः। न कुर्यात्पा
र्वणा दन्यत्॰ ब्रह्मीभूताय भिक्षवे। २। तस्मात्त माचरेद्भि
क्षुः पुत्रादि निधने श्रुते। पितृ मातृ क्षयं श्रुत्वा॰ स्नात्वा शुद्ध्य
ति सांवरः। ३। ब्रह्मीभूतस्य तातस्य॰ कर्तव्यं नैव विद्यते।
दशाहे तु व्यतिक्रान्ते॰ पुत्रः कुर्यात्तु पार्वणम्। ४। प्रत्यब्दं पा
र्वणं कुर्यादेव धर्मः सनातनः द्वादशाह मनध्यायं॰ कुर्याच्छि
ष्यः समाहितः ५ गतिरेहं गृहीस्पृष्ट्वा॰ स्नानमात्रेण शुद्ध्य
ति। अश्वमेधफलं सर्वं॰ प्राप्नुवन्ति पदेपदे ६ इति शौनकः
॥ एवं॰। कुर्यादावसथं यस्तु॰ दद्याद्ध यतये यदि। ज्ञानिनं नु
विशेषणा स्यातिब्रह्मणः पदमिति दक्षः॥ एवं॰ पक्वेष्टक
चितं कृत्वा सर्वलक्षण संयुतं। मृन्मयं वा तथा वेश्म कृत्वा
वाश्म मयं तथा। दत्वास्थान मवाप्नोति प्राजापत्यम संशः

यमित्यादि पराशरः॥ एवं· आश्रमेतु यतिर्यस्य· मुहूर्त्तम
पिविश्रमेत्। किं तस्यान्येन धर्मेण· कृतकृत्यो हि जाय
ते॥ संचितं यद्गृहस्थेन· पापमात्मन्त्यान्तिकम्। निर्दहेद्य
न्ति तत्सर्वं· एकरात्रोषितो यतिः॥ जन्मप्रभृति यत्पापं।
गृहस्थेन तु संचितम्। तत्सर्वं नाशयत्याशु· एकरात्रोषि
तो यतिः॥ व्याधितानां तु भिक्षूणां· कुर्यादारामसण्ड
पम्। पथ्याद्यैः परिचर्य्येच· भेषजैरुपाचरेत्॥ किंन्त
स्यान्येन धर्मेण: स्वर्गे सोऽमृतपा भवेत्। यति प्राप्यं
प्राप्य लोकं· सोऽनन्तसुखमश्नुते इति क्रतुः॥ एवं गृह
स्थार्जितं पापं· ज्ञानतोऽज्ञानतोऽपि वा। निर्दहिष्यति त
त्सर्वं· एकरात्रोषितो यतिः।१। दुर्वृत्ता वा सुवृत्ता वा· ज्ञा
निनोऽज्ञानिनोऽपि वा। गृहस्थैर्यतयः पूज्याः· परत्र हितं
कांक्षिभिः।२। एकदण्डी त्रिदण्डी वा· शिखी मुण्डी तथै

य

व च। कषायमात्रसारोऽपि· यतिः पूज्यो युधिष्ठिर।३। अपू
जितो गृहस्थैर्वा· तथा चार्य्यवमानितः। यतिः सर्वा तिथि
र्वापि· नरके पातयिष्यति।४। प्रज्ञाश्रुताभ्यां वृत्तेन·
शीलेन च समन्वितः। तारयेत्तत्कुलं सर्वं· एकोऽपि हि
युधिष्ठिर।५। सांगांश्च चतुरो वेदान्· योऽधीयीत दिने
दिने। सुद्वान्नं यस्य नोदेहे· तं पात्रमृषयो विदुः।६। अम
निनः सर्वसहाः· अदृष्टार्थो जितेन्द्रियाः सर्वभूतहिता मै
त्राः· तेभ्यो दत्तं महत्फलम्।७। इति गौतमसंहिता॥ अत्र
यति भिन्ना अप्यतिथयः भिक्षवो नानाविधाः। ब्रह्मचा
री यतिश्चैवः विद्यार्थी गुरुपोषकः। अध्वगः क्षीणवृत्तिश्च
षडेते भिक्षुकाः स्मृता इति भारत वचनात्॥ एषां भिक्षा
दाने महत्फलम्॥ न यस्मै देहशरणाभिक्ष्य· नहि शुश्रूषया
न च। गृही स्वर्गमवाप्नोति· यथा चातिथिपूजनादिति शं
ख संहितावचनात्॥ एवं स्कन्दपुराणे शिववाक्यम्। ब्रह्मा
विष्णुश्च रुद्रश्च· समाध्यामकृतस्तथा। सकृदुक्ते न यति

ना॰पितृदेवाःसवासवाः।१। सर्वे तेतृप्तिमायान्ति॰ दशवर्षाणि

पञ्च च।जन्मकोटिसहस्रेषु॰पूजितस्तेन शंकरः।२। हरिब्र

ह्मा दयोदेवाः॰पितरोसुनयस्तथा।आगच्छन्तिसुरास्तेवै

अ॰थयो मुनिपुंगवाः।३। तीर्थानिक्रतवः सर्वे॰भिक्षुके ग्र

हमागते इत्यादि॥ एवं॰नक्रियागोत्रमाचारं। शौचाशौचंश्रु

तश्रुतम्। पृच्छेन्मधुकरार्थं ने॰ कुलं शीलं श्रुतं यतेरिति

क्रतुः॥ एवं॰न पृच्छे द्गोत्र वरणं॰न ध्यायं श्रुतं तथा।

हृदये कल्पयेद्देवं॰सर्वं देवमयोहि सः।१। अतिथिर्यस्य भ

ग्नाशो॰ गृहात्प्रतिनिवर्त्तते। पितरस्तस्य नाश्नन्ति॰ दशवर्षा

णि पंच चेइतिगुरुः॥ एवं॰ यतिश्च ब्रह्मचारी च॰ पक्वान्न

स्वामिनावुभौ। तयोरन्नमदत्वा च भुक्त्वा चान्द्रायणं चरेत्।

१। यतिहस्ते जलं दद्यात्॰ भैक्षं दद्यात्पुनर्जलम्। तद्भैक्षं मे

रुणा तुल्यं॰ तज्जलं सागरोपमम्।२। यत्पुण्यफलमाप्नो

ति॰ गां दत्वा विधिवद्गुरोः। तत्पुण्यफलमाप्नोति॰ भिक्षां

दत्वा द्विजो गृही तिमनुः॥ ० एवं॰अकृते वैश्वदेवे तु॰ भिक्षु

के गृहमागते। उद्धृत्य वैश्वदेवान्नं भिक्षुकन्तु विसर्जयेत्

।१। वैश्वदेवकृतं दोषं॰ भिक्षुः शक्तो व्यपोहितुम्। नहि भि

क्षुकृतं दोषं॰ वैश्वदेवो व्यपोहति।२। निवेशयन्यतिं श्राद्धे

पितॄणामुत्तमोयमौ। आकल्पकालिकी तृप्तिः॰ पितॄणा

मुपजायते।३। इतिपराशरः॥ एवं॰ यतिर्यस्य गृहे भुंक्ते॰

तत्र भुंक्ते हरिः स्वयम्। हरिर्यस्य गृहे भुंक्ते॰ तत्र भुंक्ते ज

गत्त्रयमिति हारीतसंहिता॥ वटौतु समदत्तंस्यात्॰ गृहस्थे

द्विगुणां स्मृतम्। वानप्रस्थे शतगुणं॰ यतौ दत्तमनन्तकं

म्॥ एवं॰ भिक्षां सत्कृत्य यो दद्यात्॰ विष्णु रूपाय भिक्षवे।

कृत्स्नां वा पृथिवीं दद्यात्॰ तेन तुल्यं च तत्फलम् इत्यत्रिः

॥ ० ब्रह्माण्डपुराणे॰ काले वा यदि वाकले॰ श्राद्धकुर्यात्

तन्द्रितः। पितॄणां तृप्तिकामस्तु यतीनाप्य द्विजोत्तम

इति॥ एवं॰ विना मांसेन मधुना॰ विना दक्षिणया शिवाम्

इति दक्षः। २॥ एवं शुष्कमन्नं पक्वान्नं यतिभ्यो यः प्रयच्छति॥ स मूढो नरकं यान्ति तेन पापेन तत्क्षणात्॥

परिपूरणं भवेच्छ्राद्धं· यतिषु श्राद्धभोजिषु। १। ध्यानयोग परिश्रान्तं· यस्तु भोजयते यतिम्। अखिलं भोजितं तेन· त्रैलोक्यं सचराचरम्। १। यतिभ्यः श्रद्धया दद्यात्· भिक्षां पात्रमपूरणीम्। न क्षीयते न्नलं तस्य· कल्पकोटिः शतैरपि। २। भिक्षाकाले यतिर्यस्य· गृहं प्राप्तो यदा भवेत्। देयाः सर्वे रसाः तस्मै· आत्मनः शुभमिच्छता। ३। पूरयित्वा हविष्येण· पतये पः प्रयच्छति। पितृन्स उद्धरेत्पूर्वान्· अपि येन रकाश्रिताः। ४। यावन्ति यति पात्राणि· यावच्चान्नं प्रतिष्ठितम्। तावद्वर्ष सहस्राणि· स्वर्गलोके महीयते। ५। उपपन्नैर्यैः सदा भिक्षुः आश्रमस्थो विचक्षणैः। व्रतलोपो यथा चास्य न भवेच्च यथा तथा। इति वृद्धयाज्ञवल्क्यः॥ आदुष्टं पतितं विप्रं· यतिं यः परिवर्जयेत्। स तस्य सुकृतं दत्वा· दुष्कृतं प्रतिपद्यते॥ नष्टेव चगृहस्थस्य· निराशो भिक्षुको व्रजेत्। इष्टं दत्तं तपो धीतं· सर्वमादाय गच्छति॥ एवं· भिक्षाहारो निराहारो न दोषो मनुरब्रवीत्। सदन्नं वाकदन्नं वा नीलं पश्चात् स्वरैय थेति वृद्धमनुस्मरणात् भिक्षान्नं सदा शुद्धा॥ एवं मनुस्मृतावपि शुद्धिप्रकरणे· अ ५ मृत्तोयैः शुध्यते शोध्यं· नदी वेगेन शुध्यति। रजसा स्त्री मनोदुष्टा· संन्यासेन द्विजोत्तमः। १। अद्भिर्गात्राणि शुध्यन्ति· मनः सत्येन शुध्यति। विद्यातपोभ्यां भूतात्मा· बुद्धिर्ज्ञानेन शुध्यति। २। नित्यं शुद्धः कारुहस्तः· पुरोयच्च प्रसारितम्। ब्रह्मचारिगतं भैक्ष्यं· नित्यं मेध्यमिति स्थितिरित्याद्युक्तम्·। ३। अत्रैव मन्वर्थमुक्तावल्यामपि· ब्रह्मचार्यादिगतभैक्ष्यमनाचान्तस्त्रीदत्तमपि रथ्यादिक्रमणेपि च सर्वदा शुद्धामिति शास्त्रमर्यादेत्युक्तम्॥ अत्रान्यान्यपि ऋषिवचनानि बहूनि सन्ति॥ इति भिक्षाविचारः॥ अत्र· अतैजसानि पात्राणि· तस्य स्युर्निर्व्रणानि च। तेषामद्भिः स्मृतं शौचं· चमसानामिवाध्वरे। १। अलाबुं दारुपात्रं च· मन्म

यंवैदलं तथा। एतानि यति पात्राणि। मनुः स्वायंभुवोः ब्रवी दितिग्ग ६ मनूक्तानि सधुद्धियति पात्राणि॥ एवमत्र- मद्धेरणु दार्वलाव्वश्म सयं पात्रं यतेः स्मृतम्। शुचिरम्भ स्त्वमीषांच। गोवालध्या घमर्षणामिति पराशरसंहितो क्तानि ज्ञेयानि॥ अत्रपुनरेतन्मनुप्रोक्तधर्मसारमुच्यते ॥सर्वेषामपिचैतेषां शुभानामिह कर्मणाम्। किञ्चिच्छ्रे यस्करतरं कर्मोक्तं पुरुषंप्रति।१। सर्वेषामप्यैतेषामा त्मज्ञानं परं स्मृतम्। तन्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः।२। यथोक्तान्यपि कर्माणि परिहाय द्विजो त्तमाः। आत्मज्ञाने शमे वस्यात् वेदाभ्यासे च यत्नवान्। ।३। एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः। प्राप्ये तत्कृतकृत्योहि द्विजो भवतिनान्यथा॥ ४॥ एतद्धोऽभि हितं सर्वं निःश्रेयसकरं परम्। अस्मादप्रच्युतो विप्रः प्राप्नो तिपरमां गतिम्।५। सर्वमात्मनि संपश्येत् सच्चासच्च समा हितः। सर्वं ह्यात्मनि संपश्यन्ना धर्मे कुरुते मनः। ६। आ त्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम्। आत्मा हि जन यत्येषां कर्मयोगं शरीरिणाम्।७। एष सर्वाणि भूता नि पञ्चभिर्व्याप्य मूर्तिभिः। जन्मवृद्धिक्षयैर्नित्यं संसा रयतिचक्रवत्।८। एवं यः सर्वभूतेषु पश्यत्यात्मानमा त्मना। स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम्।९। इ त्यलमतिविस्तरेणा सुमुक्षूणाम्॥ ॐ नमस्तस्मै तिकार केभ्यः समस्तगुरुभ्यश्च नमो नमः॥ इति संन्यासि धर्मसं ग्रहः इति श्रीमन्निर्मलसम्प्रदायाक्त पण्डितोद्धवसिंह संगृहीत स्मृत्यादिप्रोक्त धर्म संग्रह आश्रम धर्म रहस्या परनामा ग्रन्थः परिसमाप्तः॥ समाप्तश्चायं ग्रन्थः॥४॥

ब. ध. ८३

पि

# ॥ शुद्धाशुद्धपत्रम् ॥

| पृष्ठांकं | पंक्त्यंकं | अशुद्धम् | शुद्धम् | पृष्ठांकं | पंक्त्यंकं | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ३ | १२ | वैल्पौ | वैल्पो | २४ | २६ | पंक्ति॥भो | पंक्तिभो |
| ३ | १९ | मधमेत् | पधमेत् | २५ | ७ | चांद्रायंच | चांद्रायणं |
| ५ | ४ | चतुर्वे | चतुर्वी | २७ | ६ | वर्धयतु | वर्धयितु |
| ५ | २८ | ग्रहात् | ग्रहान् | २९ | ११ | येकेना | येनकेना |
| ६ | ११ | नकृष्णा | नकृष्ण | ३० | ७ | मद्वंज्ञाच | मृद्वंगींच |
| ७ | १४ | स्त्लपि | स्त्रग्वपि | ३० | १२ | तद्दिच्छया | तदिच्छया |
| ७ | १९ | सापिनः | स्त्रग्व्यपि | ३२ | १६ | विभागं | विभागे |
| १० | २५ | नामसत्व | नामसत्य | ३४ | ६ | स्त्रीराणा | स्त्रीराणां |
| ११ | २४ | क्षेरुह्यते | च्छदह्यते | ३४ | १३ | क्षान्त्या | क्षान्त्या |
| १२ | ५ | मद्यामां | मद्यमां | ३४ | १९ | शायनादीन | शयनादीन |
| १२ | १३ | कैवर्चे | कैवर्ते | ३७ | ७ | गववध | गववध्य |
| १३ | २० | त्सर्वे | त्सर्वे | ३७ | १६ | त्नराभरणां | त्॥र॥भरणां |
| १४ | १३ | ब्रह्मप्रज्ञा | ब्रह्मप्रज्ञां | ३७ | २३ | क्वि या | क्रिया |
| १४ | २२ | वृक्षीत्स्थ | वृक्षास्थ | ३७ | २७ | युक्तौ | युक्तो |
| १५ | १७ | आर्य्यावते | आर्य्यावर्ते | ३९ | १५ | खिन्ना | खिन्ना |
| १६ | ५ | कत्यादि | कट्यादि | ४० | १५ | हयते | हूयते |
| १७ | ६ | नन्यय | नन्याय | ४० | २२ | व्रतश्रेष्ठे | व्रतश्रेष्ठे |
| १७ | २८ | मान्त्र | मांत्र | ४० | २४ | सुमुक्त | सुमुक्त |
| २० | ११ | क्रमत्तच | क्रमन्नच | ४१ | १९ | संवध्यते | संवध्यते |
| २० | २४ | पापराशि | पापराशिं | ४२ | ९ | क्रसं | क्रमं |
| २१ | ११ | धर्मक्ष • | धर्मःक्ष | ४२ | १३ | त्वादीनि | त्यादीनि |
| २२ | ६ | पूनयेद् | पूजयेद् | ४२ | २२ | पानेपृष्ठे | पाने पृष्ठे |
| २३ | १३ | त्वेभज्ञानाहृष्ठ। | त्वेभज्ञानाहृष्ठ | ४२ | २६ | ह्यादृदा | ह्यादृश |
| २३ | १३ | स्त्रौः | सौः | ४३ | २ | जुहुतः | जुहुतः |
| २३ | २८ | गुरावादि | गुरायादि | ४३ | १४ | द्विजाः | द्विजा |
| २४ | १४ | षडरात्रं | षड्रात्रं | ४३ | २३ | स्त्रान्पंत्र | स्त्रान्मंत्र |

| पृष्ठांकं | पंक्त्यंकं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७१ | ३ | न्नपान्न | न्नपान |
| ७२ | १ | व्रह्मणी | व्रह्मणि |
| ७२ | २७ | कुतपो | कु० तपो |
| ७३ | २ | तातिच | तीतिच |
| ७३ | ४ | तस्यावस्थ | तस्यावसथ |
| ७३ | १० | यस्मिन | यस्मिन् |
| ७३ | ११ | वत्यूतः | वेत्यूतः |
| ७३ | १६ | पृथकपृथक | पृथक्पृथक् |
| ७३ | १७ | भुषिजः | भुग्द्विजः |
| ७३ | २४ | पदाः | प्रदाः |
| ७३ | २६ | लिंमिनो | लिंगिनो |
| ७३ | २८ | भग्नशुन्या | भग्नशून्या |
| ७४ | २ | सन्यासि | संन्यासि |
| ७४ | ३ | संम्वन्धं | सम्वन्धं |
| ७४ | ७ | वृद्धना | वृद्धाना |
| ७४ | ११ | चरेनित्यं | चरेन्नित्यं |
| ७४ | १२ | प्राकमणी | प्राक्प्रणी |
| ७४ | १४ | षिष्णुनचा | विष्णुनचो |
| ७४ | १७ | नप्रह।मात्रऽ | नंनप्रह।मात्रः |
| ७५ | २ | समां | समो |
| ७५ | ५ | वदवृत्तः | वेदवृत्तः |
| ७५ | ६ | समम्मृत | समंस्मृत |
| ७५ | १० | भीक्षा | भिक्षा |
| ७५ | १४ | ब्रुज्ञित | ब्रुज्ञीत |
| ७५ | १९ | स्मृतंः | स्मृतेः |
| ७५ | २२ | नेकत्र | नैकत्र |
| ७५ | २३ | स | सं |
| ७६ | २ | सज्जतै | सज्जते |
| ७६ | ३ | आद्य | अद्य |
| ७६ | ५ | विरामूत्र | विण्मूत्र |
|  |  | योजन्तन्न | योजनान्न |
| ७६ | ७ | तुयंगं | तुर्युगं |
| ७६ | ८ | हीतं | हितं |
| ७६ | १२ | पुरायज | पुण्यज |
| ७६ | २६ | षरामासा | षण्मासा |
| ७६ | २७ | पक्तिः | पत्तिः |
| ७७ | ११ | सर्वत्रे | सर्वत्र |
| ७७ | १२ | महद्धं | महद्ध |
| ७७ | २२ | सपज्ञः | सयज्ञः |
| ७७ | २६ | पुरायु।यस्मिन | पुण्य।यस्मिन् |
| ७८ | ६ | समग्र | सामग्र |
| ७८ | ८ | पवान्न | पवान्न |
| ७८ | ९ | भिदिति | भिरिति |
| ७८ | ११ | सर्वषा | सर्वेषा |
| ७८ | १७ | तपापा | तेपापा |
| ७८ | १७ | शयन | शयनं |
| ७८ | १८ | स्मृतो | सम्रुतो |
| ७८ | १९ | सुवृत्तं | सुवृत्ते |
| ७९ | १ | राजसुज | राजसूय |
| ७९ | १८ | वंर्णा | वंणा |

| पृष्ठांकं | पंक्त्यंकं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७१ | २२ | देवध | द्वेषध |
| ७१ | २५ | दद्याद्व | दद्याद्वा |
| ७१ | २६ | विश्रेपण | विशेषेण |
| ८० | ४ | रात्रौ | रात्रो |
| ८० | १२ | पुज्याः | पूज्याः |
| ८० | १५ | चार्ध्यं | साध्य |
| ८० | १८ | समाध्या | ससाध्या |
| ८१ | २ | पुजित | पूजित |
| ८१ | १३ | यन्प्रराय | यत्पुण्य |
| ८१ | २६ | वाकले | वाकाले |
| ८२ | २० | तपोभ्यं | तपोभ्यां |
| ८२ | २१ | पुरोयय् | पण्येय |
| ८२ | २४ | शुद्धामिति | शुद्धमिति |
| ८२ | २७ | मदिः | मद्भिः |
| ८२ | २८ | नाभिवा | नामिषा |
| ८३ | २० | मेत्व | मेत्य |
| ८३ | २३ | न्निमल | न्निर्मल |

अत्र पुस्तके २१ एतत्पत्रमारभ्य ४६ एतदंकपर्यन्तं ब्र० घ० अशुद्धम् गृ० घ० शुद्धम्

पुनरेतदंक ४७ मारभ्य । एतदंक ५० पर्यन्तं । ब्र० घ० अशुद्धं । बा० घ० शुद्धम्

एतदंक ५१ मारभ्य एतदंक ८३ पर्यंतं ब्र० घ० अशुद्धम् । सं० घ० शुद्धम्

इति शुद्धीपत्र समाप्तिः ।

उपरख्याति मीमांसकानां अन्यथाख्या-
तिर्नैयायिकानां आत्मख्यातिर्बौद्धा-
नां असत्ख्यातिः शून्यवादिनां अ-
निर्वचनीयख्यातिर्वेदान्तिनां
अत्र पादे १ ।। अधिकरणान्येकादश
११ ब्रह्मलिंगानि भाष्ये २८५० टीका-
यां ३३०० ।। अधिकरणे २२
शास्त्रिक